THE

PRINCESS OF WALES

SARASVATĪ BHAVANA TEXTS

*Edited by*

Dr. Mangal Deva Shastri,

M. A., D. Phil. (Oxon.)



*No. 76*

# THE

# Manonuranjana Nātaka

*Published by*

The Superintendent, Printing and Stationery,
United Provinces, Allahabad

1938

श्रीः ।

# किञ्चित्प्रास्ताविकम् ।



अथेदं संमुद्र्य संप्रकाश्यते मनोऽनुरञ्जनसंज्ञकं नाटकरत्नम् । अस्य प्रणेता देवकुलोत्पन्न आपदेवसुतोऽनन्तदेवः । इदं च नाटकमिन्द्र-पूजनं वार्षिकं सपरित्याज्य श्रीकृष्णचन्द्रेण पूर्णावतारिणा श्रीनन्दादि-गोपादिभिः कारितं गोवर्धनपूजनादितो रासलीलान्तं विषयमुद्दिश्य प्रवृत्तम् । अत्र च प्रकृतेन ग्रन्थकारेण स्वीयभक्तिरसपरिल्पुतचेतसः स्वीयविलक्षणस्यातिगम्भीरस्य पाण्डित्यस्य च प्रदर्शनं कृतम् । अस्य नाटकस्य श्रोतारो जडा अपि भक्तिरसपरिल्पुतचित्ता भवन्तीत्युक्तावपि नात्युक्तिकथनदोषस्य भीतिः । अस्य नाटकसंप्राप्तेः प्रकारः कारणं चावश्यश्रोतव्यं संजातं निवेद्यते ।

एकदा पूर्वं श्रीसत्यार्जवादिगुणयुतैर्भक्तप्रवरैः श्रेष्ठिवरैः श्रीगोरी-शङ्करगोयनकामहोदयैः स्वविपुलधनव्ययेन संस्थापिते काशिकराज-कीयपाठशालास्थपुराणेतिहासपदे कस्य कीदृशस्य नियुक्तिः संजातेति जिज्ञासुभिस्तत्स्थाने नियुक्तोऽहं केनचिन्निमित्तेनाहूतः । तदा च गोप्यो व्यभिचारवत्य इत्यादिभागवतस्थं सन्दर्भं कठस्थं कथयितृभिः श्रीश्रेष्ठि-महोदयैस्तद्व्याख्याने प्रेरितः । यथाशक्ति संजाते व्याख्याने संतुष्टेषु श्रेष्ठिप्रवरेष्वनन्तरं मे मनसि विचारः सजात एनं विषयमुद्दिश्य विशिष्टो विचारो निबन्धरूपेण विरचय्य प्रकाशनीय इति, तथा कस्यचित्प्राचीनस्य भक्तप्रवरपण्डितस्य रासलीलाविषये प्रामाणिको निबन्धो विद्यते न वा ? यदि स्यात्तर्हि तत्प्रकाशनमेव सर्वापेक्षया वरमिति । एवं निबन्धं लिख-

तापि मया प्राचीननिबन्धान्वेषणे प्रयतमानेन नेपालदेशेऽनन्तदेवकृतं नाटकं मनोऽनुरञ्जनसंज्ञकमेतद्विषयं मुद्दिश्य विरचितं विद्यत इत्याप्तमुखात्संश्रुतम्। तदनन्तरं तन्महता कष्टेनानेकदानेकविरं विफलप्रयत्नेनापि मया भक्तप्रवरस्य पण्डितवरस्य नेपालदेशाभिजातस्याप्ततमस्य श्रीपद्मनाभकेसरिणः पुस्तकसंग्रहतो लब्धम्। दृष्ट्वा च तदानेकहर्षपूरितचेतसा मया नाटकस्यास्य प्रकाशने संकल्पः कृतः। अस्तु।

अयं प्रकृतग्रन्थकर्तानन्तदेव आपदेवसुतः प्रथमो द्वितीयो वेतिविषये न निश्चयेन किमपि वक्तुं शक्यते। यतः प्रसिद्धे देवकुलेऽनन्तदेवद्वयस्यापदेवद्वयस्य चोपलब्धेः। ग्रन्थकारस्तु स्वस्य गुरुत्रयमस्तीति लिखति(१)। आपदेवो रामतीर्थो नारायणभट्ट इति। तत्रापदेवस्तु तस्य पितैव। रामतीर्थस्तु मधुसूदनसरस्वतीसमकालीनः कृष्णतीर्थशिष्यः संक्षेपशारीरक-उपदेशसाहस्री-वेदान्तसारप्रभृतिग्रन्थटीकाकर्ता प्रसिद्ध एव(२)। नारायणभट्टस्तु प्रसिद्धो भट्टकुलोत्पन्नस्त्रिस्थलीसेतुप्रभृतिग्रन्थकर्तान्यो वेति संदिग्धमेव। श्रीमधुसूदनसरस्वत्यस्तु श्रीगोस्वामितुलसीदाससमकालीना एव। यतः,

आनन्दकानने कश्चिज्जङ्गमस्तुलसीतरुः।
कवितामञ्जरी यस्य रामभ्रमरभूषिता॥

इति श्रीमधुसूदनसरस्वतीविरचितं गोस्वामिविषयकं पद्यमस्तीति तद्विषयेऽभियुक्तोक्तिर्जागर्ति सर्वत्र। एवं च गोस्वामिनःसुनिश्चितो वैक्रमसप्तदशशतकप्रारम्भकाल एव श्रीमधुसूदनसरस्वतीसमकालीनानामनन्तदेवगुरूणां रामतीर्थानां समायाति। तदनुसृत्यानन्तदेवस्य च स एव कालः पर्यवस्यति। एवं च प्रथमानन्तदेवस्यायं ग्रन्थः संभवति। किंच 'ग्रन्थ-

---

१ गुरव इति वक्तव्यम्। एकस्तावत्पितैवेत्यादिकं पृष्ठे ३ द्रष्टव्यम्।

२ अच्युतमासिकस्य तृतीयवर्षस्य चतुर्थाङ्कस्य ११५ पृष्ठं द्रष्टव्यम्।

स्थप्रथमपृष्ठे लेखकेन संवत् ९६६ ? ( १९६६ ) ज्येष्ठवद्यपञ्चमी धनका' इत्यादिलिखितमुपलभ्यते। तेनापि निश्चेतुं शक्यते प्रथमानन्तदेवस्यायं ग्रन्थ इति। तद्विषय एव श्रीस्मृतिकौस्तुभे द्वितीयानन्तदेवेन 'मीमांसानयकोविदो मधुरिपोः सेवासु नित्योद्यतः' इत्युक्तमिति प्रतिभाति। अस्तु। विशेषतो विद्वद्वरैरत्रत्यं तत्वमालोचनीयम्।

नेपालदेशतः संप्राप्तमेतन्मुद्राणाधारभूतं ग्रन्थद्वयम्। तत्रोभयमपि बहुत्र खण्डितमेव। परन्तूभयग्रन्थसाहाय्येनैकं स्थलं त्यक्त्वा ग्रन्थः प्रायः पूर्णः संजातः। तत्रैकं पुस्तकं ग्रन्थाधारतया स्वीकृत्रमेकपत्रखण्डितं पञ्चाङ्कमितम्। द्वितीयं तु बहुत्र स्थाने खण्डितमङ्कचतुष्टयमितम्। खण्डितप्रकारश्च प्रथमाङ्कस्थान्तिमभागतः प्रायो द्वितीयाङ्कसमाप्तिपर्यन्तं, तथा चतुर्थाङ्के मध्य एकपत्रपरिमितं खण्डितं सर्वत्र प्रायोऽशुद्धं च।

एतत्पुस्तकं देवकुलगृहस्थितमेव यतो ग्रन्थमुखपृष्ठे 'इदं पुस्तकं बाबाजीदेवात्मजजगन्नाथदेवस्य' इति लिखितमुपलभ्यते। आधारभूतं पुस्तकं ६४ पत्रपरिमितं प्रतिपत्रं ३६ अक्षरयुताष्टपङ्क्तिपरिमितं च। पुस्तकं तु बहुत्र स्थले प्रायोऽशुद्धिभूयिष्ठं नेपालि-वङ्ग-देवनागरीप्रभृतिलिपीप्राचीनाक्षरभूयिष्ठं मध्ये मध्येचानेकाक्षररहितं च। तत्र श्लोकादिसर्वस्थलेऽनेकाक्षरयुते स्थले त्रुटितवैपरीत्यस्थिताक्षराधारेणानुकूलमक्षरसङ्घं प्रकल्प्य महता कष्टेन संयोज्यानेकदानेकवारं च समालोच्य कथंचिद् ग्रन्थः संपूरितः।

अत्र प्रथमतो ग्रन्थान्वेषणे निमित्तभूतानां श्रेष्ठिप्रवरभक्तवरश्रीगौरीशङ्करगोयनकामहोदयानां तथा ग्रन्थप्रदातॄणां पद्मनाभकेशरिणां ग्रन्थप्राप्त्यनन्तरं तत्प्रकाशने नियोजयतां श्रीमहामहोपाध्यायश्रीप्रिन्सिपलगोपीनाथकविराजमहोदयानां तथैतत्कार्ये प्रोत्साहयतां प्रिन्सिपलडॉ. श्रीमङ्गलदेवशास्त्रिमहोदयानामुपकारभारं संप्रकाश्य येषां कटाक्षक्षेपा-

त्पदात्पदमपि चलितुं न समर्थो मानवस्तेषां काशीपुरपालकानां दयां संविभाव्याशुद्धिशोधनपत्राधारेण ग्रन्थं संशोध्य सफलयन्तु मामकीनं परिश्रममिति हंसव्रतधरान् गुणैकपक्षं कक्षीकुर्वाणान् विद्वद्वरान् संप्रार्थयते—

| | |
|---|---|
| गवर्नमेंटसंस्कृतकालेज,<br>वैशाखवद्यामावास्यायां संवत् १९९५,<br>काशी. | विद्वद्वशंवदः—<br>**अनन्तशास्त्री फडके**<br>व्याकरणाचार्यो मीमांसातीर्थश्च । |



श्रीगणेशाय नमः ।

श्रीसरस्वत्यै नमः । श्रीमदापदेवचरणारविन्दाय नमः ।

# मनोऽनुरञ्जनं नाटकम् ।

## प्रथमोऽङ्कः ।

कालिन्दीपुलिने सुगन्धिपवने मन्दारमूले लस-
न्नीलेन्दीवरसुन्दरः कटितटप्रद्योतिपीताम्बरः ।
कोऽपि श्रीमुखमारुतेन मुरलीमालापयन्मञ्जुलं
लोलाक्षीरभिरञ्जयन्विजयते कञ्जस्फुरल्लोचनः ॥१॥

अपि च, यस्यामी विधिवासवादिविबुधावासेषु विस्फूर्जिताः
संतोषाश्चलवीचयो नृपसुखान्येतान्यथो बुद्बुदाः ।
अन्ये पुत्रकलत्रमित्रविषयाः सौख्योदया बिन्दवः
सोऽयं पूर्णसुखार्णवो विजयते नीलाम्बुदः श्यामलः ॥२॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमलम् । अद्य खलु नानाश्रुतिस्मृतिपुराणादिवचनशतैरप्यवचनीयेन चतुर्मुखशतमखप्रमुखसुरैरपि सततमाराधनीयेन सनकसनातनसनन्दनादिभिरतिकृतार्थैरप्यनुचिन्तनीयेन त्रिभुवनपरिमोहनप्रकृतिकमनीयेन श्रीनारायणेनान्तर्यामिणा प्रेरितोऽस्मि । यदुत हरिभक्तिरसप्रधानं कमपि निबन्धं सदनुबन्धिनं साधुषु विशदमभिनीय प्रदर्शयेति । ( दिक्षु चक्षुः प्रसार्य सानन्दम् ) अहो !

यत्नशतैरप्यलभ्याः समागता एव सभ्याः। उपविष्टा एव चैतेऽस्मत्कलावलोकनसमुत्सुकैरितरलोकैः साकम्। तदस्मदीयः संतोष एवामीषामुद्देश्यः। यतः—

न विदन्ति परस्य भिन्नतां
स्वयमप्याकलयन्ति खिन्नताम्।
सुखसन्ततये च सन्ततं
प्रयतन्ते कृपणेषु साधवः ॥३॥

तदिमे कृपणानस्माननुगृह्णन्ति।

(प्रविश्य)

**नटः**—किमिदमकाण्डे कृपणतावलम्बनम्। तथाहि।

कदापि नैव स्वपदाच्चलन्तो
ये साधवो धैर्यमहामहीध्राः।
तन्मस्तकान्दोलनशक्तिभाजो
भवादृशाः किं कृपणा भवन्ति ॥४॥

**सूत्रधारः**—अलमलं विवक्षितमेवोद्यताम्* ।

**नटः**—(सविनयम्) विवक्षितमेतदेव यदावाभ्यामिह सभ्यानुरञ्जनं विधेयं तत्केन साधनेनेति।

**सूत्रधारः**—अये न जानासि। शृणु।

अधुनानन्तकविना मधुना तुलनास्पदम्।
अन्वबन्धि निबन्धोऽयं हरिभक्त्यनुबन्धिना ॥५॥

**नटः**—(श्लोकं पठन्) अये उपक्रम एव मधुसंमितः प्रक्रम्यते।

**सूत्रधारः**—कः संशयः।

स्वभावरमणीयानां स्पृहणीय उपक्रमः।
यथा रतिसमारम्भे कान्तावदनचुम्बनम् ॥६॥

---

*उच्यताम्

**नटः**—(पुनः पुनरुच्चैर्हसन् तदेव)

यथा रतिसमारम्भे कान्तावदनचुम्बनम्।

**सूत्रधारः**—अलमलं न वेत्सि महत्सभाप्रवेशसन्निवेशम्।

महत्समाजे हसितं दधानोऽ-
नुरागवृद्धया बत भूरिवारम्
जनः समायाति किलापमानं
नायाति भूयः स सभासु धाम ॥७॥

**नटः**—(सविनयम्) अये किंनामकमिदं निबन्धनम्।

**सूत्रधारः**—अत्रैव श्लोके चतुर्षु चरणेषु प्रथममन्त्यमितिक्रमेण मिलिताक्षरैर्दत्तमस्योत्तरम्।

**नटः**—अहो विदितं मनोऽनुरञ्जनं नाम निबन्धनम्। फलमप्येतन्निबन्धनं मनोऽनुरञ्जनं भवति।

**सूत्रधारः**—एतन्निबन्धनहेतुभूतमस्य कवेरनन्तदेवाभिधस्य ज्ञानमपि मनोऽनुरञ्जनम्।

यः पूर्वोत्तरमीमांसापरिशीलनशीलवान्।
तदीयाध्यापनेनैव समयं खलु नीतवान् ॥८॥

**नटः**—अस्य महाभागस्य कीदृशो गुरुः स्यात्।

**सूत्रधारः**—गुरव इति वक्तव्यम्। एकस्तावत्पितैव।

यस्यापदेव इति नाम न कस्य कर्णे
विद्याचयस्य हृदि कस्य न काङ्क्षितं स्यात्।
शीलं च यस्य मनसैव तमालनीलं
संसेवतः प्रथितमप्रतिमं पृथिव्याम् ॥९॥

अपरस्तु, श्रीरामचन्द्रचरणार्चनपक्वचित्तः
श्रीरामनामसततस्मरणैकनिष्ठः।

श्रीरामचन्द्र इव धैर्यधुरीणबुद्धिः
श्रीरामतीर्थ इति यो जगति प्रसिद्धः ॥१०॥

नटः—अस्य किल जगद्गुरोर्महान् दर्शनाभ्यासः श्रूयते, पुनरपि परमेश्वरनामनिष्ठत्वम्। अहो महदाश्चर्यम्।

सूत्रधारः—किमाश्चर्यं किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने। पश्य,

सच्छास्त्रं निखिलं पयोम्बुधिरयं तस्याथ दैनंदिना-
भ्यासो मन्दरपर्वतो नयचयैरालोचनं मन्थनम्।
तत्र श्री हरिनाम शुद्धममृतं श्रान्तेष्वनन्येष्वपि
श्रीकान्तस्य कृपावशेन तु मुखे केशांचिदेवाञ्चति ॥११॥

नटः—प्रकृतम्।

सूत्रधारः—अन्योऽपि भट्टनारायणः। यस्य खलु

ईर्ष्या सरोजासनमादधाना
स्थिता बुधानां मुखपङ्कजेषु
नारायणस्यैव तु संश्रयेण
सद्यः कृतार्थत्वमवाप वाणी ॥१२॥

नटः—प्रस्तुतम्। किमत्र निरूप्यते।

सूत्रधारः-श्रीकृष्णकीर्तिरेव। अत एवैतन्निबन्धनं मनोऽनुरञ्जनम्।

यतः, सितमणिकुसुमौघद्योतमानोरुकान्तिः
सपदि परिहरन्ती सर्वलोकस्य खेदम्
यदुकुलपतिकीर्तिश्चन्द्रिकायाश्च मूर्ति-
र्जगति सुरसरिद्वा कस्य न स्यात्सुखाय ॥१३॥

नटः—(मस्तकमान्दोलयन्) अये! किं रागिणामपि तत्र सुखम्।

सूत्रधारः—कः संशयः। पश्य

अपि भवविषयेषु व्यग्रतामाश्रयन्तो
यदुनृपतिगुणेषु प्रीतिमन्तो भवन्ति।

तरुकुसुमरसानां वेदितारोऽपि भृङ्गाः
प्रविधति सहसैव प्रेम पङ्केरुहेषु ॥१४॥

अपि च, संप्रति संसृतिभाजां श्रमहननमजानतां तु विदितचरम् ।
कमलारमणगुणानां वर्णनमाकर्णनं वापि ॥१५॥

**नटः**—किमनेन कविना हरेः किल गुणवर्णनं क्रियते ।

**सूत्रधारः**—न जानासि ।

पुण्येन कोऽपि गणनानिपुणो धरण्याः
रेणून् दिवश्चलगणान् गणयेत् कदाचित् ।
पुण्यैरपीशकृपयापि चतुर्मुखोऽपि
श्रीकान्तवीर्यगणनां तु कदापि नेयात् ॥१६॥

किंच,

श्रीकृष्णनाथगुणजातमशेषमेतत्
ब्रूयात्कथं कविकुल खलु खर्वबुद्धि ।
प्रत्याननं द्विरसनोऽपि सहस्रवक्त्रोऽ-
प्यत्र प्रभुर्न हि बभूव कदापि शेषः ॥१७॥

**नटः**—यदुपतेः कतिपयगुणवर्णनेन किं स्यात् ।

**सूत्रधारः**—किं न स्यात् । पश्य,

शौरेरधिगुणलेशैः
कविजननिलया विशोभते वाणी ।
द्वित्रैरपि शशिकिरणै-
र्विकसति पङ्केरुहश्रेणी ॥१८॥

**नटः**—किमिति तर्हि यदुपतिमेव सर्वे न निरूपयन्ति । केचित्खलु कवयः कल्पितार्थप्रबन्धैरेवातिविततवाग्व्ययं विदधति ।

**सूत्रधारः**—शृणु

सुदीर्घसंसारपथप्रपन्ना
चिरेण खिन्ना खलु वाक्कवीनाम् ।
पुण्येन पूर्णामृतदीर्घिकायां
विश्राम्यति श्रीपतिवर्णनायाम् ॥१९॥

किं वा,

कविता लक्षणसहिता
यदुपतिरहिता न शोभते वाणी ।
सुन्दरतनुरपि रमणी
न भवति दृश्या विना कान्तम् ॥२०॥

अपि च, मृषात्मगुणकल्पने गुणिनि दोषसंजल्पने
परस्य परिपीडने भृशमनीयतायुर्व्ययम् ।
अतः परमपि क्षणं न यदि यादवाधीशितुः
कथंचन कथां श्रयत्यहह जन्म सर्वं वृथा ॥२१॥

**नटः**—भ्रान्तिरेव सर्वपुरुषाणां यदमी सुखार्थतयैव सर्वं कालं कलयन्ति न तु तल्लभन्ते । यतः

अत्यन्तानर्थबाधायां संसृतौ हि कुतः सुखम् ।
प्रदीप्ताङ्गारशय्यायां सुसुप्तमिव देहिनाम् ॥२२॥

**सभ्याः**—(स्वगतम्) अहो परमार्थगर्भा एवानयोर्वाचः । यद्वयं संसृतिनिर्वृतिकामाः । संप्रति सर्वं यदुपत्यनुबन्धिनिबन्धनं श्रोष्यामः ।

**सूत्रधारः**—(आकाशे दक्षिणतः कर्णं दत्त्वा)

कलमिह किल गायन्नेति दिश्यो द्विरेफः । (पुनः सव्यतः कर्णं दत्त्वा)
सुरसदनविहारी गीतकृत्कोकिलोऽयम् । (सानन्दम्)
प्रविलससुभुजौ स्तो नारदस्तुम्बरुश्च
त्रिभुवनसुखहेतू गीतविद्यैकसेतू ॥२३॥

(पुनरपि सानन्दमवलोक्य) अहो सपक्षावेव पक्षीभूतौ । तदलमावाभ्यामितोऽपसर्तव्यम् ।

अति महति समागते सभायां
प्रभवति नाल्पजनस्य सुप्रसङ्गः ।
उदयति दिवि तिग्मरश्मिबिम्बे
विलसति नेतरतेजसः प्रकाशः ॥२४॥

(इति निष्क्रान्तौ)

इति प्रस्तावना ।



**नारदः**—(प्रविश्य वीणां रणयन् कण्ठं च तया सह संवादयन्)

जलधरगतनीलस्तेयशीलं शरीरं
तडिदमलविलासस्तेयशीलं च वासः।
विमलकमललीलास्तेयशीले च नेत्रे
स्वयमपि नवनीतस्तेयशीलः प्रभुर्नः ॥२५॥

(ततस्तुम्बरुः प्रविश्य)

**तुम्बरः**—अहो गोविन्ददेवस्यादिपार्षदो नारदोऽयम्।

यदुपतिमतिमञ्जुरीति गायन्
सततमसौ भुवनेषु धन्य एकः।
अविदितभववेदनः स्वयं य-
स्तृणमिव मुक्तिमवैति सर्वदैव ॥२६॥

(किंचिदग्रत उपसृत्य गीतध्वनिं श्रुत्वा समानविषयतया किंचिदुत्पन्नमत्सरः)

अहो अयमत्रापि गायति। (पुनर्विवेकं कृत्वा) अलमलं मत्सरेण।

यस्य*दैवमनुकूलमीयते
तस्य किंचिदपि नैव हीयते।
केवलं स्वकृतमत्सराग्निना
स्वमनस्तनुरियं च दह्यते ॥२७॥

किंच, सकलसंसृतिदुःखनिवारणं
सपदि चोत्कटनिर्वृतिकारणम्।
मधुविनाशनकीर्तिमुत्तमां
बत विना पशुमत्र भजेन्न कः ॥२८॥

**नारदः**—समवलोक्य ओङ्कारं प्लावयन्) नमो ३ नमः।

**तुम्बरुः**—(प्रणम्य) तदेव कृष्णसुगीतं गीयताम्।

---

*यहि

नारदः—(श्रीकृष्णलीलास्मरणाप्रेम*भरेण)

जलधरगतनीलस्तेयशीलं शरीरं
तडिदमलविलासस्तेयशीलं च वासः ।
विमलललितलीलास्तेशीयले च नेत्रे
स्वयमपि नवनीतस्तेयशीलः प्रभुर्नः ॥ २९ ॥

तुम्बरुः—कथमहो प्रभोः स्तेयशीलत्वं सभायामुद्घाट्यते । किं च

स्वल्पो जनस्तेयविधिं विधत्ते
न तस्य निन्दां कतमोऽपि धत्ते
कथं चकार व्रजबल्लवीनां
दध्यादिचौर्यं महतो महीयान् ॥ ३० ॥

नारदः—( परिहासेन ) सोऽयमणोरप्यणीयानित्युचितमेव किं न स्यात् । वस्तुतस्तु,

स्तेयं ह्यपूर्णकामानां दूषणं परिगण्यते ।
तदेव पूर्णकामस्य भूषणं न तु दूषणम् ॥३१॥

अपि च, अन्यत्र दोष एव क्वचिद्गुणतामापद्यते ।

यदपि जगति चौर्यं देहिनां निन्दनाय
स्फुरति यदुपतेस्तत्सज्जनानन्दनाय ।
अतिशयकठिनत्वं दूषणायैव काव्ये
भवति तु वनितानां भूषणाय स्तने तत् ॥३२॥

तुम्बरुः—एवमेव ।

नारदः—अन्यदपि श्रोतव्यम् । नेदं सकलजनसाधारणं स्तेयं यत्सभायां नोद्घाट्यते, किंत्वतीवाद्भुतलीलासंकलितम् ।

तुम्बरुः—कथं कथम् ।

* स्मरणप्रेम ।

**नारदः**—प्रविशति सदनेषु श्रीपतिःस्तेयहतोः
भवति सपदि शीर्णः शृङ्खलागाढबन्धः ।
निहितमपि च गव्यं भूरिगाढान्धकारे
विशदयति शिशूनां स्वप्रकाशेन शौरिः ॥३३॥

किंच, उपर्युपरिनिर्मिता भुवनसन्ततिर्विस्तृता
यदाश्रिततया सदादृढतया समुन्मीलति ।
स एष पिठरादिभिः कथमपि क्रमेणोच्चकैः
कृतां विरचनां कथं श्रयति शिक्यगव्यग्रहे ॥३४॥

**तुम्बरुः**—लघुकर्मसमारम्भे लघुरेव समाश्रयः ।
तदनेनापि देवेन लघुतैव समाश्रिता ॥ ३५ ॥

अहो तावन्नारदो रुद्रविष्णवादिपरम्परोपरिस्थितस्य नन्दनन्दनस्य चरणस्मरणप्रसृमरेण प्रेमभरेण स्खलदानन्दजलपुलकितनिखिलतनुः क्षणमवस्थितो मदीयोक्तस्वनानुसंधानावधानविकलश्चास्ति । अहोऽस्य भाग्यवतो भगवति प्रीतिः । यतः—

श्रीनन्दनन्दनपदस्मरणानुबन्धः
कस्याप्युदञ्चति न कृत्स्नमहाजनस्य ।
भृङ्गस्य पङ्कजपरागरसानुषङ्गो
नो कोकिलस्य न च केकिकुलस्य लोके ॥३६॥

**नारदः**—(प्रमृज्य नेत्रे)

दुग्धं मे नवनीतमेव बहु मे दध्युत्तमं देहि मे
पूर्वं सर्वसखिभ्य इत्यपि जनैः प्रत्येकशः प्रार्थितः ।
पीठाद्यूर्ध्वपरंपरोपरिगतो रेमे सरोजेक्षणः
शिक्येभ्यः सखिकाङ्क्षितानि फलयन्नानाभुजः कौतुकी ॥३७॥

**तुम्बरुः**—अन्यदप्यद्भुतमेतस्य श्रुतम् । यदा किल यदुकुलकलिका-विकासनैकभानुरयमुदयमासादयति स्म । तदा

उत्पन्नः सह भूषणैः समनयज्ज्योतिष्ट्वमन्धन्तमो
बन्धः किं च कपाटशृङ्खलमयः सद्यो विशीर्णः स्वयम्।
नन्दः स्वालयमानयंश्च तमिमं पूर्णे निशीथागमे
संपूर्णां यमुनां ततार चरणाम्भोजेन शूराङ्गजः॥ ३८॥

**नारदः**—उत्तरार्द्धे नातीवाद्भुतम्। यतः

तमिममेव समाकलयन् पिता
स यमुनां विततार न तद् बहु।
यदनुचिन्तनवान् वरो जन-
स्तरति संसृतिसंज्ञकमर्णवम्॥३९॥

अस्य किल यदुकुलजलधिजन्मनः श्रीकृष्णचन्द्रमसः प्रविततैव चरित्रचन्द्रिका। तथाहि,

साधुचित्तकुमुदैकरञ्जिका दोषचक्रपरिभोगभञ्जिका।
सर्वसंसृतितमोऽतिवर्तिका भाति माधवचरित्रचन्द्रिका॥ ४०॥

**तुम्बरुः**—अधुनानुभूतं मया।

यद्वार्त्तयैव निखिलार्तिविनाशपूर्वं
चेतो बिभर्ति मधुसागरवर्तिसौख्यम्।
एतादृशो न हि नरेषु न चासुरेषु
नैवामरेषु च समस्ति कुतोऽपरेषु॥ ४१॥

तस्मादमुष्मादाधिक्यं तु दूरापास्तम्।

(नेपथ्ये)

आः कोऽयं जल्पति। अस्मत्स्वामिशतमखनियोज्यकुलप्रसूत-नन्दनन्दनस्य सप्तहायनस्य का चेयमलीका प्रशंसा।

**नारदः**—तुम्बरो! श्रूयतां दुर्जनप्रलपितम्।

सतां स्वाभाविकोत्कर्षेष्वसहिष्णुत्वदूषिताः।
मिथ्या निजस्वभावेन वाग्विलापान् वितन्वते॥४२॥

तदिह दुर्जनप्रसङ्गे न स्थेयम् ।

( इति निष्क्रान्तौ )

( ततः प्रविशति बन्दिद्वयं वाग्विलासो मनोविलासश्च )

**वाग्विलासः**—यस्याज्ञया जलदमण्डलमेतदुर्वीं

वृष्ट्वा विभावयति सस्यसमृद्धिगुर्वीम् ।
सोऽयं समस्तजनजीवनहेतुभूतो
वज्री न कस्य धरणीनिलयस्य पूज्यः ॥ ४३ ॥

अपि च, यं वेदविद्यासु बहुप्रवीणाः
स्तुवन्ति शंसन्ति यजन्ति यज्ञे ।
गन्धर्वविद्याधरचारणाद्या
गायन्ति सोऽयं जगतां नियन्ता ॥ ४४ ॥

**मनोविलासः**—अये पाकशासनगुणप्रकाशनमाचरसि, नन्दनवनकुसुमनिचयमपि च शिरसि करे च निवहसि, तन्नूनं सुरसदनादागच्छसि ।

**वाग्विलासः**—यथा वदसि ।

**मनोविलासः**—अहो ? अपूर्वता नन्दनवनकुसुमनिचयस्य ।

इयममुष्य मनोरमता परि-
स्फुरति कापि धरातलदुर्मिला ।
यदवलोकनकामनयागतं
नयनमञ्चति नैव पुनः पराक् ॥ ४५ ॥

किं च, एतैः प्रसूनैः प्रगृहीतचित्ता
दिव्या द्विरेफावलिरेति सेयम् ।
संगीतमुच्चैः स्वरमुन्नयन्ती
मनोहरन्ती पथि कोकिलानाम् ॥ ४६ ॥

**वाग्विलासः**—अये सर्वोऽयं पुण्यविलासः । तथा हि,

ते पारिजाततरवः कुसुमानि तानि
ते वायवः सुखमया विमला स्थली सा ।
ते चोर्वशीप्रमुखपद्ममुखीविलासाः
सर्वं सखे चरितभूरिमखेन लभ्यम् ॥ ४७ ॥

किं च, नानाधनार्जनकृतो रचयन्ति दाना-
न्युच्चावचानि विचरन्ति तपांसि निस्वाः ।
ते यान्ति नन्दनवने सुरसुन्दरीणा-
मुत्पातिचञ्चलदृगञ्चलगोचरत्वम् ॥ ४८ ॥

**मनोविलासः**—आस्तामपूर्वत्ववार्तेयम् । वृत्तान्तस्तत्रत्यः कथ्यताम्

**वाग्विलासः**—नाम्ना क्वाप्यमरावतीति नगरी सौवर्णहर्म्या शुभा
तस्यां कापि सभा स्फुरन्मणिमयस्तम्भैरलं भास्वरा ।
साकं नाकनिवासिभिर्मुनिजनैः प्रीत्योर्वशीनिर्मितं
नृत्यं तत्र सहस्रनेत्रकमलैरालोचयत्पाकभृत् ॥ ४९ ॥

**मनोविलासः**—ततस्ततः ।

**वाग्विलासः**—एवं गते कियति काले स भगवान् पुरुहूतः स्वमनसि प्रादुर्भूतकार्यविशेषः सभायामेव दूरत आसीनं विधिनामानं देवदूत-मवलोकितवान् ।

ऐन्द्री तदा सहस्रनयनी कमनीयशीला
यैवोर्वशीललितवक्त्रवशीकृतासीत् ।
सेयं पपात सहसैव तु देवदूते
भृङ्गावली विमुखपद्मगतेव चूते ॥ ५० ॥

**मनोविलासः**—ततस्ततः ।

**वाग्विलासः**—दूतं समुत्थाय विधाय पाण्यो-

रन्योन्यसंबन्धनमाशु मूर्ध्नि ।
आज्ञेति यावत्पदमात्रमूचे
तावत्सहस्राक्ष उवाच वाचम् ॥ ५१ ॥
गन्तव्यं नन्दनिलये वक्तव्यं मेऽनुशासनम् ।
यष्टव्यं मां समुद्दिश्य द्रष्टव्यं फलमुत्तमम् ॥ ५२ ॥

**मनोविलासः**—ततस्ततः ।

**वाग्विलासः**—स च तदानीमेव प्रस्थितो वयं च नन्दसंदर्शनकामुकाः, सोऽयमस्माभिः सह क्षणं चलित्वा क्षणमस्मदग्रेसर इव चलित्वा स्वामिकार्यगौरवेण चलित एव, न पुनर्दृग्गोचरीभूतः । ( कर्णं दत्त्वा ) अये, दुन्दुभिध्वनिः श्रूयते, अन्विष्यतां किमनुबन्ध्यमिति ।

**मनोविलासः**—(ईषदपसृत्य पुनरेत्य) क्षत्तैवायमतिनिकटमुपागतः । श्रोतव्यमेतत् ।

( ततः प्रविश्य क्षत्ता )

इह खलु सकलभूतलवर्तिगोपालचक्रचूडामणिः श्रीनन्दराजःसुरराजमाराधयिता । तदत्र वीथयःसंमार्ज्यन्तां, लेपनभूमयः संलिप्यन्तां, ध्वजाः पताकाश्चोत्थाप्यन्तां, तोरणस्रजःसंबन्ध्यताम् ।

**वाग्विलासः**—( मनोविलासं प्रति ) अये, देवदूतमुखेन शतमखनियोगः श्रीनन्दराजकर्णपथमवतीर्णः ।

सतां सर्वः समुद्योगः फलेनैवावधार्यते ।
यथैव सुखभोगेन प्राचीनः पुण्यसंचयः ॥ ५३ ॥

( नेपथ्याभिमुखमवलोक्य सानन्दम् । ) सिद्धं नः समीहितम् ।

कृताभ्यङ्गस्नानः परिहितनवक्षौमवसनः
समुन्मीलन्नानाविधमणिलसद्भूषणधरः ।
परानन्दद्योतिस्फुटविमलतुन्दः सुरुचिरः
सवायेनो (?) वृन्दारकवर इवायाति पुरतः ॥ ५४ ॥

तदेतत्कर्तृकोऽस्मत्स्वामिसमुत्सव एकतः स्थित्वा द्रष्टव्यः ।

( इति निष्क्रान्तौ )

विष्कम्भकः ।



( ततः प्रविशति यथानिर्दिष्टो नन्दःसह ब्राह्मणैः सह गोपालैः । )

गोपालाः—आर्य, यमुनापुलिनमेव देवतायजनमध्यवसितम् । इह हि विपुलपादपावलिरेव श्रीमन्मखसमुत्सुकया दूरतः समागतानां परिश्रमापहाराय साहाय्यकमाचरिष्यति । तथा हि,

तटभुवि यमुनायाः पुष्कला पादपालि-
विलसति खलु सद्यः पान्थविश्रान्तिहेतुः ।
सुललितमलिगीतं यत्र वायुश्च शीतः
फलमपि बहु शस्तं तत्र खेदः कुतस्त्यः ॥ ५५ ॥

किं च, अयं गोवर्धनगिरिरपि ।

विपुलतालतमालकदम्बकै-
र्बकुलबल्वजचन्दनचम्पकैः ।
क्षपयति श्रममेष विशेषतः
सपदि लोचनगोचरतां गतः ॥ ५६ ॥

नन्दः—( सानन्दमवलोक्य स्वगतम् ) ।

एषा मण्डपरचना कर्षति नयनानि सर्वलोकानाम् ।
अतिशयललिता कृतिरिह विलसति नवयौवनेव स्त्री ॥ ५७ ॥

अपि च, एते गोरसकुम्भा एते रम्भासपल्लवाः स्तम्भाः ।
विलसतु यज्ञारम्भः संप्रति सम्भारसंचये मिलिते ॥ ५८ ॥

( ब्राह्मणान्प्रति प्रकाशम् )

पुरुहूतो यथा मन्त्रैः समाहूतो ममाध्वरे ।
समायाति तथा कार्यं किमशक्यं तपस्विनाम् ॥ ५९ ॥

ब्राह्मणाः—( पुरतो विरचितव्याकोशाञ्जलि ) राजन्

अमृताशोऽपि देवेशः स्वयमेव समेष्यति ।
अमृतादपि यत्स्वादु यद्धि स्निग्धं प्रदीयते ॥ ६० ॥

गोपालाः—(परस्परम्) । व्रजपतिमखोत्सवजनितचित्तोत्सवारम्भाः समागता व्रजाङ्गनाः करकलितकनकभाजनावस्थितदीपावलिभिर्नीराजनाविधिं नन्दराजस्य विधाय तत्र तत्र व्याप्रियन्ते । तत्र--

सौवर्णरत्नमयचञ्चलकुण्डलानां
व्यालोलहारचपलमण्डनमण्डनानाम् ।
एणीदृशां तडिदुदञ्चितगौरभासा-
मासां विभाति ललितानि गतागतानि ॥ ६१ ॥

ब्राह्मणाः—( नेपथ्याभिमुखमवलोक्य परस्परम् । ) अहो ? इन्द्रनीललतिकेयमालक्ष्यते । ( चैतन्यमभिलक्ष्य )

इन्द्रनीललतिकेव शोभना
भृङ्गपुञ्जरचना विराजते ।
चित्रमत्र जननेत्रपङ्कज-
श्रेणिरेव मुहुरेति संमुखी ॥ ६२ ॥

( पुनर्विमृश्य ) नेयं भृङ्गपुञ्जरचना । यतः--

यः खलु निखिलजनानामिन्द्रियनिचयो निसर्गतः खिन्नः ।
स परानन्दपयोधौ खेलनमनुसंदधात्यधुना ॥ ६३ ॥

( पुनरपि विमृश्य ) । अहो ? विदितं श्रीकृष्णोऽयं समायाति ।

बध्नैव लावण्यगुणेन गाढं
चक्षूंषि लोकस्य बलाद्विकर्षन् ।

आकर्णविस्तीर्णदृशा च भूय-
स्तेष्वेव पीयूषमिवाभिवर्षन् ॥ ६४ ॥

किं च, संपूर्णलावण्यकलाधरोऽय
विराजते सर्वजनेष्वपूर्वः ।
अयं तु संयाति लयं जनानां
यस्योदये खेदमयः पयोधिः ॥ ६५ ॥

( ततः विशति श्रीकृष्णः सह गोपकुमारैः, गोपकुमाराः श्रीदामप्रभृतयो नृत्यन्तो गायन्तश्च करतालिकाभिः मिथः । )

इह हि नन्दनन्दनेन
तनुविलुप्तचन्दनेन ।
मुक्तसर्वबन्धनेन
जितममर्त्यवन्दनेन ॥ ६६ ॥

( एकत्र स्थिता वाग्विलासप्रभृतयो मिथः )

**वाग्विलासः**—अहो पितापुत्रयोर्विरुद्धशीलत्वं, यन्नन्दोऽममर्त्याराधनमीहते, नन्दनन्दनोऽयममर्त्यवन्दनीयत्वेनोपन्यस्यते । अतः सम्यगिवात्र न लक्ष्यते । भवतु पश्यामस्तावत् ।

**गोपकुमाराः**—( पुनः )

सकलचित्तरञ्जनेन
निखिलदुःखभञ्जनेन ।
कालियस्य गञ्जनेन,
वस्तुतो निरञ्जनेन ॥ ६७ ॥

**ब्राह्मणाः**—( मिथः साश्चर्यम् ) कथममी बालकाः नन्दनन्दनस्य निरञ्जनत्वं जानीयुः । ( तेषु- )

**अपरे**—सोऽयं भगवद्गुणवर्णनमहिमा । यत्

एको गुणः श्रीरमणस्य गीतः
परं गुणं ज्ञापयति क्षणेन ।
यथा पदार्थः खलु पूर्वपूर्वः
परम्परं स्मारयतीह यज्ञे ॥ ६८ ॥

अत एवास्य कवेः काव्यकलाविकास इव हरिगुणवर्णने प्रवृत्तस्य तन्महिमैव तादृशो वाचः परिस्फुरति, उदाहरन्ति चाभाणकम्, गच्छत्पिपीलिकापङ्क्तिः समुद्रमपि गच्छति ।

**गोपकुमाराः**—( पुनः )

पूतनाविशोषणेन
दानवेषु रोषणेन ।
गोकुलैकभूषणेन
जितमपास्तदूषणेन ॥ ६९ ॥

**नन्दः**—( स्वगतम् ) कथमनेन गोपकुमारगीतोत्सवेनास्मदीयो यज्ञोत्सवो भिन्नविषयो बाध्यते । तथाहि । यज्ञनिमित्तकः सर्वोऽयं स्त्रीपुरुषसमाजः ।

स्वस्वव्यापृतिविरतिं दधाति गीताय पूतनारातेः ।
न चलति न वदति किमपि स्मरति च नैवापि कर्त्तव्यम् ॥ ७० ॥

तदेतानविदितास्मदीयवृत्तान्तान् ज्ञापयामः । ( इत्यग्रत उपसृत्य श्रीकृष्णं प्रति ) अये, विधिनामकदेवदूतमुखेन पुरुहूतः स्वयज्ञविषयेऽस्मानाज्ञापयति । स हि देवदेवो वृष्टिं वितन्वन् सकलगोकुलजनजीवनहेतुर्वृन्दावनवृद्धिसाधनहेतुः । तस्मादमुष्य यजनमस्माभिरनुष्ठीयते ।

**श्रीदामा**—( श्रीकृष्णाग्रेसरो भूत्वा ) किमिदमकाण्डे परवश्यतावलम्बनम् । शृणु,

को वेह देवदूतः प्रभुरप्येतस्य कश्च पुरुहूतः ।
तद्वश्यतावलम्बे कोऽपि न नन्द प्रकर्षस्ते ॥ ७१ ॥

**नन्दः**—मास्तु प्रकर्षस्तथापि महान्तोऽल्पैः सेव्या एव ।

**श्रीदामा**—वृन्दावनं नन्दनतोऽपि रम्यं
गोष्ठं च नः स्वर्गपदाद्वरिष्ठम् ।
किं देवराजाय च नन्दराज
त्वयाल्पता स्वात्मनि कल्पितासौ ॥ ७२ ॥

किं च, यमुनाजलसंमिलिते कालियहालाहलेऽतिसंमिलिते ।
अस्मज्जीवनहेतुः किं पुरुहूतस्त्वया विहितः ॥ ७३ ॥

अपि च, वृन्दावनतरुवृन्देऽप्यतिशयकिसलयफलादिसंबन्धे ।
शौरेरेव तु हेतुः सन्ततपीयूषवर्षणी दृगसौ ॥ ७४ ॥

**नन्दः**—सत्यम् । अस्माकमभ्युदयहेतुरमुष्य शौरेः संबन्ध एव, बहुधा विदितं तदेतत् ।

**वृद्धः**—परन्तु
विदधीत सुराधिराजो गोष्ठ-
प्रणाशमिति चेतसि भाति शङ्का ॥ ७५ ॥

( पुनः श्रीदामा सामर्षम् )
इन्द्रो विधास्यति यदा व्रजनाशबुद्धिं
सद्यो ऽवहास्यति तदा स्वपदाधिपत्यम् ।
सोऽयं पतिष्यति बकीबकधेनुकानां
पङ्क्तौ भविष्यति च मङ्गलमेव गोष्ठे ॥ ७६ ॥

**श्रीकृष्णः**—( प्रहस्य )
शुभाशुभं पूर्वकृतं हि पुंसां
कर्मैव तत्तत्सुखदुःखहेतुः ।
कर्मानुसारेण च सौख्यभोक्ता
किं तत्र शक्रेण समर्चितेन ॥ ७७ ॥

**नन्दः**—( सपश्चातापम् ) अहो निरर्थकोऽयमुद्योगः, वृथा च संभृताः संभाराः।

**श्रीकृष्णः**—किमिति निरर्थकत्वम्, एतैरेव संभारैर्ब्राह्मणाः पूजनीयाः।

इन्द्रादयोऽपि यन्मन्त्रैरवशा वश्यतां गताः।
भृत्या इव समायान्ति पुनर्यान्ति यदाज्ञया ॥ ७८ ॥

**ब्राह्मणाः**—( स्वगतम् ) अहोऽस्माकं करद्वयेऽपि लड्डुकम्। यद्वा आर्त्विज्यक्लेशाभावेन तत्फलभागित्वेन चायमेव पक्षः साधीयान्।

**श्रीकृष्णः**—( पुनरपि )

यष्टुः करात्पतति पावकवक्त्रमध्ये
गव्याहुतिस्तदनु सूर्यमुपैति संयम्।
तत्रापवृष्टिपरिणाममुपैति तस्माद्
गावः समस्तजनजीवनहेतुभूताः ॥ ७९ ॥

विशेषतो गोकुलवर्त्तिनाम्। तथा हि

आसां प्रसादाद् घृतमिश्रितानि
निपीय भूयांसि पयांसि नित्यम्।
पीयूषमेते गणयन्ति सर्वे
गण्डूषवार्त्ता खलु गोकुलस्था ॥ ८० ॥

तस्मादस्माकमभिप्रेतमेतत्। यदुत ब्राह्मणा गावो गोब्राह्मणाश्रयो गोवर्धनगिरिश्च पूजनीय इति।

**नन्दः**—( सानन्दं मस्तकमान्दोलयन् श्रीकृष्णं प्रति )

अस्माकमुपजीव्या हि विप्रा गावो गिरिः सदा।
तान्विहायान्यपूजायामुपजीव्यविरोधिता ॥ ८१ ॥

तदलं विलम्बेन। विप्राः प्रथमत आकारणीयाः।

**श्रीकृष्णः**—एके तावदत्रैव तिष्ठन्ति यज्ञार्थमाहूताः । अपरे पुनरेते यज्ञावलोकनकामुकास्त्वरया समायान्ति । पश्य,

स्वाभाविकतनुभासा रविसकाशाः स्फुरन्त्यमी विप्राः ।
उज्ज्वलतिलकविलेपनशोभिशरीरास्तपोधीराः ॥ ८२ ॥

( ततःप्रविश्य यमुनाकूलद्वयनिवासिनः शतशो ब्राह्मणाः । )

नन्दराजन् चिरं जीव राजीवदललोचन ।
अर्थिनामर्थितासारैर्दारिद्र्यभयमोचन ॥ ८३ ॥

**नन्दः**—( शिरसि करौ संयोजयन् ) ।

आवामसर्वकामाना नोद्देश्यं किंचिदिष्यते ।
अस्मदभ्युदयायैव भवदागमनं ततः ॥ ८४ ॥

**ब्राह्मणाः**—( नानाविधवसनालङ्कारचन्दनादिभिःपरिपूजिताःसानन्दम् । )

श्रीनन्द गोपनृप नन्द यशो लभस्व
नैतादृशस्त्रिजगति स्फुरति द्वितीयः ।
अस्मत्प्रदत्तहविषा बत वृत्तिभाज
इन्द्रादयो भगवतोऽनुचराः स्फुटं स्युः ॥ ८५ ॥

अपि च, अहो भवतां भाग्यम् । यतः

यत्पादपद्मनखवर्त्तिसुखस्य नेन्द्रः
कोट्यंशमप्यनुभवत्यखिलायुषापि ।
गोविन्द एष भवतामभिनन्दनार्थ-
मानन्दसिन्धुरपि विन्दति शेषभावम् ॥ ८६ ॥

**नन्दः**—( स्वगतम् ) कथममी श्रीदामवाक्यार्थमवध्वनयन्ति ।
( प्रकाशम् )

अतिशयति मलसंततिमुज्ज्वलसंपत्सुखस्य सुभूमिः ।
युष्मच्चरणनिषेवणविलसितमेवेदमस्माकम् ॥ ८७ ॥

( श्रीकृष्णं प्रति ) संपन्नं ब्राह्मणपूजनम् । गावःसमायान्तु ।

**श्रीकृष्णः**—यथा वदसि । ( ब्राह्मणाः परस्परम् ) कथमन्यदाज्ञप्तोऽन्यदेवानुतिष्ठति । तथाहि । तिष्ठन्नेव

पीताम्बरः परमसुन्दरलोलनेत्रो
वेत्राश्रयेण समधिष्ठितवामगात्रः ।
वक्त्रारविन्दपवनेन सुगन्धिरन्ध्रा-
मापूरयत्ययमहो मुरलीं मुरारिः ॥ ८८ ॥

किं च,

मुररिपुमुरलीयं सुन्दराकारकल्पां
सपदि परिगृहीता योजिता चाधरेण ।
मुखकमलमरुद्भिः कोमलैः पूर्यमाणा
निभृतममृतवृष्टिं सर्वतः संविधत्ते ॥ ८९ ॥

**बल्लववल्लभाः**—( स्वगतं सेर्ष्यमिव ) सत्यं, अमृतं वर्षति । किं तु मुरवैरिण इयं मुरली,

अधरस्थामृतस्यौघं प्रतिगृह्य प्रमुञ्चति ।
न हि मुखे स्थिरा सेयं तस्याहृतये दिवं गता ॥ ९० ॥

**ब्राह्मणाः**—( पुनः ) अहो ज्ञातम् ।

श्रीमुरारिमुरलीसमुद्भवा
मञ्जुला गतिरिहातिरञ्जति ।
पक्षिणामथ गवां नतभ्रुवां
दीर्घरज्जुरिव चित्तबन्धिनी ॥ ९१ ॥

किं च,

मुरारिमुरलीरवः सकललोककर्णोत्सवः
प्रविश्य हृदयाम्बुजे सृजति पूर्णसौख्यार्णवम् ।
मनोऽत्र ननु खेलनं कलयितुं महत्वं दधा-
त्यथास्य परमाणुता स्फुरति वासवीये पदे ॥ ९२ ॥

**वाग्विलासादयः**—कथं पुनः पुनर्ब्राह्मणानां वचसि वासवापकर्षवासनैव समुल्लसति ।

**ब्राह्मणाः**—( आयातीर्गाः समालक्ष्य ) अहो ? विदितं सोऽयं मुरलीरवो भगवता गवामानयनाय प्रयुक्तः । यः खलु तृणं चरन्तीनाम्-

समुत्सव इवोदये सपदि सौख्यभासं वने
स व्यनाशयदासु सुधारस इवासुधासंगतिम् (?) ।
स दण्ड इव चोद्गतः प्रविदधे परावर्तनं
गुणादित इवातनोद्धरिसमोपमा कर्षणम् (?) ॥ ९३ ॥

**नन्दः**—( स्वगतम् ) मुरारिमुरलीगीतिर्यष्टिरीतिमिहाश्नुते ।
यया संनोदनादेता गावो धावन्ति काननात् ॥ ९४ ॥

आश्चर्यम् । ककुद्ग्रीवाः स्तब्धकर्णाः शुक्लवर्णाः समुत्सुकाः ।
उद्बाष्पा उलसत्पुच्छा गावो धावन्ति माधवम् ॥ ९५ ॥

**ब्राह्मणाः**—( परस्परम् । ) महदाश्चर्यम् ।
पिबन्त इव चक्षुर्भिर्लिहन्त इव जिह्वया ।
गोविन्दमेता विन्दन्ति न स्मरन्त्यपि वत्सकान् ॥ ९६ ॥

**नन्दः**—( सानन्दं यथावत्पूजयित्वा ब्राह्मणान्प्रति )
साधनं साधनं लोके यच्छ्रेयः श्रेय एव तत् ।
श्रेयस्तत्साधनं चैव गोधनंचानुभूयते ॥ ९७ ॥

**तथा हि,**

न केवलं सौख्यशरीरभूतेः
स्वर्लोकसिद्धेश्च निदानभूतम् ।
इहापि संसेवनमेतदासां
दुग्धादिसौख्यान्वितमेव पुंसाम् ॥ ९८ ॥

**ब्राह्मणाः**—( स्वगतम् )

गीतकृत्या समाहूताः प्रीत्या स्फारं प्रधाविताः ।
रीत्या सम्यग् व्यवस्यन्ति गावो नन्दस्य पूजिताः ॥ ९९ ॥

( पुनःस्वगतम् )

गोवर्धनोऽयमधुनैव समर्चनीयः
सम्मर्द एष तु गवामवर्जनीयः ।
यन्नन्दनन्दनमनोज्ञमुखारविन्द-
संदर्शनप्रियमिदं ननु धेनुवृन्दम् ॥ १०० ॥

( तावन्नन्दो गोपान् प्रति )

गोवर्धनो गिरिरयं परिपूजनीयो
गावः स्थलानि कलयन्तु लसत्तृणानि ।
यत्सुभ्रुवां व्रजभुवां व्रजबालकानां
नैवान्यथा भवति सौख्यकरः प्रचारः ॥ १०१ ॥

**गोपाः**—अद्धा ।

**ब्राह्मणाः**—( मिथः )

गोपैः प्रचण्डतरदण्डधरैश्च हस्तै-
र्नानानिनादरचनैरपि नीयमानः ।
श्रीशौरिसन्निधिसमुत्थसुखाय भूयो
भूयः पराङ्मुखतयाभिसरन्ति गावः ॥ १०२ ॥

तथा, गावः स्थलान्तरमितः खलु नीयमाना-
कन्या इव स्ववरपक्षमतीव खिन्नाः ।
स्वं बन्धुवर्गमिव नन्दतनूजमेनं
यान्त्यः पुनः पुनरमूरवलोकयन्ति ॥ १०३ ॥

**नन्दः**—( श्रीकृष्णं प्रति ) अधुना गोवर्धनपूजनम् ।

**श्रीकृष्णः**—अद्धा सिद्धा एव संभाराः ।

किं चन्दनैश्चन्दनमण्डितस्य
पुष्पैश्च किं पुष्पितपादपस्य ।
शैलत्वमस्याथ फलोपहारै-
रमुष्य किं वा फलितद्रुमस्य ॥ १०४ ॥

**ब्राह्मणाः**--तथापि भक्तिप्रिया देवाः । पश्य,

पद्मालया लालितपादपद्मो
नारायणः पूर्णसुखार्णवोऽपि ।
पत्रेण पुष्पेण फलेन वापि
प्रसीदति प्रीतिसमर्पितेन ॥ १०५ ॥

( नन्दो गोवर्धनं पूजयति, ते एव मिथः )

वाद्यध्वनिर्विपुलघोषविशेषरम्यो
प्राप्तं च मङ्गलमतः खलु गायकानाम् ।
आनन्द एव भवति व्रजसुन्दरीणा-
मेवं विवाह इव भाति समुत्सवोऽयम् ॥ १०६ ॥

अस्यैवोत्सवस्य प्रतिबिम्बमिवोत्सवान्तरम् ।

वाद्यध्वनिप्रतिरवो गिरिकन्दरासु
गीतं च कोकिलकुलस्य कलं विभाति ।
गोवर्धनाद्रिशिखरे हरिणाङ्गनाना-
मानन्द एव समुदञ्चति मानसेषु ॥ १०७ ॥

**वाग्विलासादयः**--(मिथः) फलित एव गोपकुमाराणां मनोरथः । येषां वचसा व्रजपतिना सुरपतिमवज्ञाय शिलोच्चय एवोच्चैस्तरामर्चितः । तथाहि,

ध्वजाः पताकाः प्रतिपादपाग्रं
तदन्तरालेषु च तोरणानि ।

मखध्वजश्चन्दनपुष्पमाला-
परिष्कृतो भाति च शैलमूर्ध्नि ॥ १०८ ॥

अपि च, कुङ्कुमकेसरपङ्कैः सिक्तः सर्वत्र सानुषु श्रीमान् ।
विलसति पुष्कलपरिमलकुसुमसमूहैः समर्चितः शैलः ॥ १०९ ॥

**ब्राह्मणाः**—( पर्वतमवलोक्य मिथः । )

विशालनयनः कोऽयं तमालसदृशद्युतिः ।
श्रीकृष्ण इव सर्वाङ्गसुन्दरः कनकाम्बरः ॥ ११० ॥

तथा, नन्देन भक्तिरसपूर्वकमर्पितानि
गन्धेन किं च दिवि दैवतदुर्लभानि ।
अन्नानि भूरिमधुराणि मनोहराणि
भुङ्क्ते क एष भगवानिव भव्यभूपः ॥ १११ ॥

( पुनरपि कर्णं दत्वा ) शैलः स्वयं प्रसन्नोऽस्मि वरदोऽस्मीति भाषते ।
नूनं गोवर्धनगिरिर्भगवान् भविता स्वयम् ॥११२॥

( ब्राह्मणेषु-) **एकः**—यद्येष गोवर्द्धन एव साक्षात्
कृष्णेन सादृश्यमनुष्य कस्मात् ।

( तेष्वेव-) **निपुणः**—सदैव गोविन्दपदारविन्द-
सम्बन्ध एवात्र निबन्धनं स्यात् ॥ ११३ ॥

**अतिनिपुणः**—कृष्णेन सदृशः कृष्ण एव । यतः,

चिन्तिता कृष्णता चास्य चेतःसंतापशातिनी ।
एतस्य रूपलालित्यरीतिर्नान्यत्र दृश्यते ॥ ११४ ॥

किंच, सर्वश्रमापहरणाय पदारविन्दं
सौख्यैकसिन्धुजननाय मुखारविन्दम् ।
कस्यापरस्य कमलारमणं विहाय
देहद्युतिर्मदनकोटिपराभवाय ॥ ११५ ॥

तदेतत् त्रयं गोवर्धनवर्त्यनुभूयते, अपि च चापल्यं तु,

आकर्णविस्तीर्णदृशा च तूर्णं

संपूर्णसौख्यार्णवमातनोति ।

तस्मात्, तमालनीलः कमनीयशीलः

सोऽयं हरिः संप्रति संप्रतीमः ॥ ११६ ॥

किंत्वसौ जन्मान्तरीयाधमर्ण इव नानाप्रकारैर्नन्दस्यर्णं परिहरति । तथाहि,

पुत्रो भूत्वा रिपून् हत्वा रक्षित्वा गोधनानि च ।

अधुना तु, गोवर्धनगिरिर्भूत्वा नन्दमानन्दयत्यसौ ॥ ११७ ॥

तथा, स्वयं प्रशमिनो विदुर्न च तपस्विनो योगिनो

न वेत्ति च चतुर्मुखप्रमुखदेवतानां गणः ।

स एष सुखहेतवे सकलगोकुलस्थायिनां

विभुर्जयति कर्मकृद्भवति दैवतं चाधुना ॥ ११८ ॥

**नन्दादयः**—( पूजनं समाप्य मिथः ) अहो भुक्तममृतं देवताहृदयकाठिन्यरूपेण परिणमते । यदमी कतिधा स्ताविता अपि नामास्मान्प्रति प्रशिक्षितवन्तः । एष तु शिलोच्चयोऽपि कृपयातिकोमल एव । यतः,

अद्यार्चितः पर्वतसार्वभौम

एष प्रसादं भृशमाससाद ।

( सामर्षम् ) अतः परं वंशपरंपराया-

मस्माकमर्च्यस्त्वयमेव नेन्द्रः ॥ ११९ ॥

( इति गिरिं प्रणम्य निष्क्रान्ताः )

**वाग्विलासादयः**—तमिमं वृत्तान्तं वृत्रान्तकं प्रति निवेदयिष्यामः ।

( इति निष्क्रान्ताः )

**इति श्रीमद्बापदेवसूनुनानन्तदेवेन विनिर्मिते मनोऽनुरञ्जनाभिधे हरिभक्तिनाटक इन्द्रमखभङ्गो नाम प्रथमोऽङ्कः ।**

# अथ द्वितीयोऽङ्कः ।

(ततः क्रोधावेशेन रक्तोत्पलवनसदृशसहस्रनयनः प्रविशति पाकशासनः सह मातलिना )।

**पाकशासनः**—गोपानुद्दिश्याकूर्चोपरि करकमलं परिचालयतु मातले।

यज्ञैः सदा संभृतमुख्यकल्पै-
रेतेऽस्मदाराधनमेव चक्रुः।
दधीनि दुग्धानि घृतानि भुक्त्वा
भुक्त्वा गवां संप्रति किं तु मत्ताः ॥ १ ॥

अत एतेषां मदपरिहाराय पश्य किं विधेयम्।

**मातलिः**—देव ! त्रैलोक्यराज्यपदवीप्रतिबन्धकेषु
वृत्रासुरप्रभृतिदानवपुङ्गवेषु।
क्षिप्तं यदभ्युदयकारि बभूव वज्रं
युक्तं तदेव किमु गोपजने प्रहर्तुम् ॥ २ ॥

तथाहि, रणभुवि यो हि भटानां प्रचरति कठिनेषु कण्ठनालेषु।
सोऽयं क्वापि कृपाणः प्रयुज्यते किं मखच्छेदे ॥ ३ ॥

**पाकशासनः**—अनेन खलु भवद्वचनेन गोपानां दुःपरिहरो मदहेतुः स्मारितः, यस्य नखच्छेदे कृपाणसहस्रमपि न प्रभवति। अपिच,

रणभुवि दितिजभटानामतिशयकठिनेषु कण्ठनालेषु।
प्रचलति यन्नखधारा तत्परिहाराय को यत्नः ॥ ४ ॥

**मातलिः**—( स्वगतम् ) कथमेतस्य चिन्ताप्रादुर्भावः, शनैः शनैर्नयनकमलेषु रक्तिमा च प्रसरति। ( प्रकाशम् ) कोऽसौ कथ्यताम्।

**पाकशासनः**—श्रूयताम्। येन हि

कण्ठाश्लेषवशात् क्षणादिह तृणावर्त्तः क्षयं प्रापितः
नागः खेलनलीलयैव सहसा नाशं समासादितः।
धृत्वा चञ्चुपुटे तृणमिव बको द्वेधा विदीर्णस्त्वयं
तेनामी मदहेतुना न गणयन्त्यस्मान् व्रजस्थायिनः॥ ५॥

**मातलिः**—विदितं नन्दनन्दनो गोपानां मदहेतुः। तर्हि तत्र वज्रमेव प्रयुज्यताम्।

**पाकशासनः**—यद्यपि प्रयुज्यते तथापि फलेन न युज्यते। यतः,

यद्यस्मदीयमुद्योगमेष विद्याद्विचक्षणः।
अनर्थोऽस्माकं सुमहान् कदाचिद्भविता खलु॥ ६॥

**मातलिः**—अहो सप्तहायनादप्यनर्थसंभावना।

**पाकशासनः**—केयं हायनगणना। न स्मरस्यधुनैवोक्तम्। कण्ठाश्लेषवशात् क्षणादिह तृणावर्तः क्षयं प्रपित इत्यादि।

अपि च,

स्तन्यमेव पिबता हतामुना
पूतना सपदि बालघातिनी।
स्वल्पकोमललसत्पदा स्पृशन्
स्पृष्टमेव शकटं विपर्यगात्॥ ७॥

किं च, यस्मिन् समागच्छति कौतुकेन
त्यक्ता सुरैः स्वर्गपुरी भयेन।
अघासुरः सोऽयमनेन नीतो
यमालयं बालकलीलयैव॥ ८॥

अन्यच्च, अतिव गगनस्पृशौ विशदशौभिशाखाशतौ
वनस्पतिधुरंधरौ विपुलपल्लवाडम्बरौ
त्रिवर्षशिशुना सता शिशुजनैः समं खेलता
ह्यनेन यमलार्जुनौ सपदि लीलयोन्मूलितौ ॥ ९ ॥

किमुत सप्तहायनादनर्थसंभावना, तस्मादलमनेन सन्धिग्रहेण ।

**मातलिः**—तत्किमधुना क्रोधोपसंहारः ।

**पाकशासनः**—नहि नहि किन्त्वेतस्मिन् विषये खलस्वभावानुसरणमेव शरणम । यथा

क्रोधो हृदि स्फुरति भाति बहिः प्रसादो
वाक्यं सुधारससमं विषमं च चेतः ।
कार्यं परस्परपराभवनं प्रयत्नात्
धार्यं च सख्यममुनेति खलस्वभावः ॥ १० ॥

**मातलिः**—तत्किमिदानीमनुचितकर्मारम्भः शोभते देवेन्द्रस्य ।

**पाकशासनः**—कार्यानुरोधः किं न कुर्यात् । पश्य,

कार्यानुरोधेन बुधोत्तमाना-
मशिष्टकर्मण्यपि भाति वृत्तिः ।
विनापराधं रघुनायकस्य
कुतोऽन्यथा वालिवधे प्रवृत्तिः ॥ ११ ॥

**मातलिः**—( स्वगतम् । ) अहो पुत्रपक्षपातः । यदयं रघुनायकेऽनुचितकारित्वमारोपयति । यतः—

भ्रातुर्जायाहरणाद्राज्यापहरणात्तथा च कुपितेन ।
उचितो रघुकुलपतिना रचितो ननु वालिनो दण्डः ॥ १२ ॥

**पाकशासनः**—श्रीवामनेन च विरोचननन्दनस्य
भूर्याचिता निजपदत्रयमेव पूर्णम् ।

पश्चात्प्रतिग्रहविधौ दधता महत्वं
सर्वस्वमेव सहसा प्रहितं तदस्य ॥ १३ ॥

तत्र यदि यथायाचितमेव पदत्रयं प्रतिगृह्यतामिति बलिरवक्ष्यत्, तर्हि प्रभविष्णुरपि विष्णुरेतस्य किमकरिष्यत् । किन्त्वतिधार्मिकस्य तस्य वञ्चनमेव कृतं विष्णुनापि । तत्रापि कार्यानुरोध एव मूलम् ।

**मातलिः**—( पुनः स्वगतम् ) अहो कृतघ्नोऽयम् । यदस्य कृते विष्णोरयमुद्योगः, तमेव च निन्दति, न च वस्तुतो वञ्चनम् । तथाहि,

एतावता ननु विरोचनसूनुचित्त-
वृत्तेः परीक्षणमकारि मुरारिणेह ।
नोचेत्कथं हरिः सुतलराज्यपदं प्रदाय
तद्द्वारपालपदमथासममालम्बे ॥ १४ ॥

**पाकशासनः**—जामदग्न्यमुनिना मनस्विना
हैहयाधिपकृतापराधतः ।
सर्वभूवलयवर्तिभूभुजां
संयुधापि बहुधा वधा मुधा ॥ १५ ॥

एतदत्यन्तमनुचितम । किमुत कार्यानुरोधेऽस्माकम् ।

**मातलिः**—( पुनः स्वगतम् ) एतदप्ययुक्तमेव ।

यद्भूपतीनां दुरितस्थितानां
चक्रे विनाशानविनाशिरामः ।
अपारभूभारनिवारणाय
तत्केवलं कारुणिकस्य कृत्यम् ॥ १६ ॥

किं तु, अतीवदुश्लिष्टमतिप्रविष्टः
स्वयं तथान्यानपि मन्यतेऽयम् ।
स्वमानसारेण सदैव दुष्टो
जगद्विजानाति हि दुष्टमेव ॥ १७ ॥

तदेतेषां भावप्रकाशेन क्षुभ्येदयम् । तदलमनेन, प्रकृतमेव प्रष्टव्यम् । ( प्रकाशम् ) देव कथं कथय खलस्वभावानुसारेण गोपनन्दनपराभववस्याचरणम् ।

**पाकशासनः**—वयमत्र कर्तार इति न कस्यापि ज्ञापनीम् । आज्ञापनीयाश्चेकान्ते मेघाः । ते चाकालवृष्टिव्याजेन सकलं गोकुलं व्याकुलयिष्यन्ति, समार्था हि ते ।

यद्भूतलं सकलसस्यसमृद्धियुक्तं
यत्पादपाश्च विलसन्ति फलैः प्रसूनैः ।
आप्यायनं च भुवि सर्वजनस्य यद्वा
सर्वत्र तत्र जलदावलिरेव मूलम् ॥ १८ ॥

किं च, अन्योन्यं मिलितेषु सिन्धुषु जले लीने महीमण्डले
भारस्यापगतौ भुजङ्गमपतौ पर्यङ्कतामागते ।
सर्वाद्यः पुरुषोत्तमः कमलया साकं चिरं यत्सुखं
शेते तत्र निदानमादिममभी मेघा महावृष्टयः ॥ १९ ॥

तद् गच्छ मेघानाज्ञापय ।

**मातलिः**—अद्धा ।

**पाकशासनः**—अहमपि तैरतिवृष्ट्या व्याकुलं क्रियमाणं गोकुलं मेघान्तरितो विलोकयिष्यामि ।

( इति निष्क्रान्तौ )

( ततः प्रविशति नन्दराजः प्रातर्यमुनाकूले, अनुपदं विद्याविनोदो बन्दी च )

**विद्याविनोदः**—दिष्ट्या वर्द्धसे नन्द, यत्समृद्धिसंपन्नस्य स्नानादिधर्माचरणं निष्पद्यते, इह चिरं तदस्त्वित्युचितमेव वक्तुम्, तथापि,

नन्द गोविन्दसविधे परमानन्दभागिनः ।
चिरं तदस्तु वचनं समुद्रस्येव सिञ्चनम् ॥ २० ॥

**नन्दराजः**—( सस्मितं प्राचीमवलोक्य ) अङ्ग उदित एव भगवान् गभस्तिमान् ।

आरुण्यं कलयन् तमांसि दलयन् पद्मानि चोन्मूलयन्
फुल्लं कैरवकाननं मुकुलयन् कोकान्मिथो मेलयन् ।
नक्षत्राणि च तेजसा विकलयन् कान्तादृढाश्लेषणं
यूनामेष शनैः शनै शिथिलयन् सूर्यः समुन्मीलति ॥ २१ ॥

**विद्याविनोदः**—साधु साधु । अस्मदीयं श्रोतव्यम् ।

गाढान्धकारमदवारणपुङ्गवेन
ज्योतिर्जलं सकलमेव निपीतमेतत् ।
तत्सीकरा बहुतराः करपुष्करेण
प्रोत्सारितास्तु परितः प्रसरन्ति ताराः ॥ २२ ॥

तस्यैतस्य, अन्धकारमदवारणस्य वै
दुर्जनस्य परिनिग्रहेण च ।
पूर्वपूर्वतदरिग्रहादसौ
केसरीव बहिरुपैति भास्करः ॥ २३ ॥

अपि च, क्षणं सन्ध्यामुपास्यैवं सहस्रकिरणः स्वयम् ।
अगम्यमपि योगीव परव्योमावगाहते ॥ २४ ॥

**नन्दराजः**—( अन्तःकरणे स्मृत्वा ) बन्दिराज ! पश्य, कियानुपरि समागतो भास्वान्, तदधुना चेतश्चिन्तया व्याप्यते ।

**विद्याविनोदः**—किमिति किमिति ।

**नन्दराजः**—एतावता कालेन प्रत्यहं गावो वनभुवं प्रविश्य तृणानि चरित्वा पानीयं च पीत्वा सुखेन पादपच्छायासु विश्रम्यन्ति । अद्य तु,

अद्यापि गावो नायान्ति न च गोपकुमारकाः ।
न च गोकुललोकैकवर्धनः फणिमर्दनः ॥ २५ ॥

असौ कदाचिद्विलम्बेतापि, तथाहि,

आगच्छन्नथ काननं प्रति मुदा गोपाङ्गनाभिर्यदा
श्रीकृष्णः परिदृश्यते पथि तदा ताभ्यः कुतो निर्गमः।
तथाहि, ताम्बूलैः कुसुमैः फलैः किसलयैः कौतूहलैः पेशलै-
र्वार्ताभिश्च विलम्बमेव गमयन्त्येतं समन्ताद्यतः ॥ २६ ॥

तथापि, गोपकुमारैरानीयमाना धेनवः पुरतः समायान्त्येव, तद्गच्छ धेनूनां समाचारं झटित्यानय।

**विद्याविनोदः**—(गत्वा पुनरेत्य) आनन्दः(१) परिपूर्ण एव परितः-

**नन्दराजः**—नायान्ति गावः कुतः-?

**विद्याविनोदः**—गोपालाः खलु गोकुलेश विवशाः खिन्नाः समस्ता अपि।

**नन्दराजः**—दैत्यःकोऽपि समागतो व्रजभुवम्-?

**विद्याविनोदः**—नैवम-

**नन्दराजः**—कुतः खिन्नता गोपानां वद-?

**विद्याविनोदः**—दोहनात-

**नन्दराजः**—कथमिदम-?

**विद्याविनोदः**—दुग्धं प्रवृत्तं गवाम् ॥ २७ ॥

**नन्दराजः**—किमेतदुच्यते।

**विद्याविनोदः**—यदस्ति तदुच्यते, श्रूयताम्,

एकैकामिह गां दुहन्ति शतशः पर्यायशो वल्लवाः
एकैकश्च शतं खलु घटान् दुग्धाथ दोग्धि श्रमात्।

---

(१) उक्तिप्रत्युक्तियुतःश्लोकोऽयम्।

पूर्णे पूर्णमथो नयन्ति कलशं गोपाङ्गनाः सत्वरा

इत्थं दुग्धविवृद्धितः समभवत् पर्याकुलं गोकुलम् ॥ २८ ॥

नन्दराजः—( सहर्षम् ) विद्याविनोदः किमेतद्बीजं विजानासि।

विद्याविनोदः—कथं नाविदितं विद्याविनोदस्य।

नन्दराजः—तदुच्यताम्।

विद्याविनोदः—सौन्दर्यसिन्धुरिह पङ्कजपद्मनेत्रः

पाणिद्वयेन पुरतः श्रितरत्नवेत्रः।

मध्ये गवां स्फुरति नीरदनीलकान्तिः

दुग्धानि वृद्धिमत एव भृशं प्रयान्ति ॥ २९ ॥

नन्दराजः—युक्तमुक्तं स हि गवामतिवल्लभः। तथाहि,

न वत्सेऽपि गवां प्रेम न चापि परिचारके।

न स्वीयेषु स्वाङ्गेषु यथा बकनिषूदने ॥ ३० ॥

किं च, स हि प्राणोऽनावरणीयोऽपि धेनूनाम्।

देशं विनैव नियतं समयं विनैव

वत्सं विनैव पदबन्धविधिं विनैव।

कण्डूयनानि च विना खलु योऽपि कोऽपि

दुग्धानि दोग्धि यदि सन्निधिरस्ति शौरेः ॥ ३१ ॥

( पुनः स्वगतम् ) कृष्णस्य कञ्जदलमञ्जुललोचनस्य

संदर्शनेन खलु संकटमोचनस्य।

लावण्यतः सपदि मन्मथमोचनस्य

तत्किं न यज्जगति विस्मयमादधाति ॥ ३२ ॥

( प्रकाशम् ) ततस्ततः।

विद्याविनोदः—स बल्लवानामथ बल्लवीनां

श्रमं समीक्ष्याशु दयापयोधिः।

क्षणाद् विदूरेऽपसरन्मुरारि-
विरामयामास पयांसि तासाम् ॥ ३३ ॥

( तिर्यगवलोक्य ) पश्य पश्य ।

अयं समारुण्यमनोरमाभ्यां
पद्भ्यां कृताम्भोजपराभवाभ्याम् ।
कन्दर्पकोटिप्रतिमाङ्गशीलः
सोऽयं समायाति तमालनीलः ॥ ३४ ॥

नन्दराजः—( सोत्साहं दृष्ट्वा )

वयस्या अप्यमुष्यामी समायान्ति गवां गणैः ।
किं तु गोवर्द्धनगिरेःपन्थानं कथमाश्रिताः ॥ ३५ ॥

विद्याविनोदः—नानाविधवनगमने शिशवः सर्वे विवादमापन्नाः ।
स्वरसप्रीतिसमेताः श्रीपतिमेकं तु पप्रच्छुः ॥३६॥

नन्दराजः—ततस्ततः ।

विद्याविनोदः—दोहावसानसमयेऽथ गवां प्रयाणे
सर्वेऽपि गोपशिशवस्तव नन्दनेन ।
गोवर्धनक्षितिभृतोऽन्तिकमद्य गन्तुं
संबोधिताः स्वमुरलीरवलीलयैव ॥ ३७ ॥

नन्दराजः—अथ गोवर्धनाद्रिगमने किमस्याशयं विजानासि ।

विद्याविनोदः—विजानामि, एवं किल पिङ्गलः पठितवान्,

वृष्टिं करिष्यति परामामराधिराजः
क्लिष्टं भविष्यति च गोकुलमद्य कृत्स्नम् ।
किं त्वेक एव कमलोपमलोचनोऽयं
गोवर्धनेन सुखयिष्यति साधनेन ॥ ३८ ॥

तदयमतिनिकटवर्तिवनान्यपहाय गोवर्द्धनगिरिमनुसरन्निममेवाशयं विशदयति ।

**नन्दराजः**—( संभयम् ) कुपितः खलु पुरुहूतः पूजनलोपादसत्कृतः स मया ।

**विद्याविनोदः**—किमत्र भयं, पिङ्गलवचनानुसारिणा पूजित एष नगेशो भवतः सुखसाधनं भविता ।

**नन्दराजः**—न जानासि ।

अशुभानि भवन्त्येव सूचने शकुनादिना ।
शुभानि सूचितान्येव भवन्ति न भवन्ति वा ॥ ३९ ॥

तद्गच्छ कुसुमनिचयमवचिनु, गृहे गत्वा प्रातःकालिकभगवत्पूजनं करिष्यामस्तावत् ।

( इति निष्क्रान्तौ )

इति श्रीमदापदेवसूनुनानन्तदेवेन विरचिते मनोऽनुरञ्जनाभिधाने हरिभक्तिनाटके द्वितीयोऽङ्कः ।



# तृतीयोऽङ्कः ।



( ततः प्रविशतो भिन्नदेशौ भिक्षुकतापसौ )

**भिक्षुकः**—तपस्विन्नेतावन्तं कालं भवतालङ्कृतः कतमो देशः ।

( परितो निपतद्बिन्दुजलं जटामण्डलं तदीयमवलोक्य ) आर्य,

यत्स्वर्धुनीविमलवारि विलोलवीची-
विस्तारि यत्र सकलश्रमहारि पुंसाम् ।
तत्रावगाहनमकारि किमद्य सद्यो
दोषापहारि भवता ननु तापसेन ॥ १ ॥

**तापसः**—( सोच्छ्वासम् )

न स्वर्धुनी नयनयोर्विषयोऽपि तत्र
संभावना तदवगाहनगोचरा का ।
वृष्ट्या पुरन्दरविनिर्मितया परं तु
प्रच्याविता वयमिह व्रजवर्त्तिसौख्यात् ॥ २ ॥

**भिक्षुकः**—कष्टं कष्टम्, द्वयं सुःदुखं भवतः, वृष्ट्युपद्रवो व्रजवर्त्ति-सौख्यप्रच्यवोऽपि । तदेकं पृच्छामि तावत् कीदृग् व्रजवर्त्तिसौख्यम् ।

**तापसः**—( मुच्छ्वस्य ) किं वक्तव्यम् ।

अतीव मृदुला भुवः फलितपुष्पिताः पादपाः
जलान्यतिशयामलान्यतिसुगन्धयो वायवः ।
पयोदधिघृतप्लुतं सततमेव भोज्यं नृणां
न कस्य जगति स्पृहा भवति गोकुलस्य स्थितौ ॥ ३ ॥

अपि च, समस्तजनतामनोगतविषादपाथोनिधिं
विशोषयति केवलः सपदि कृष्णवंशीरवः ।

सुखं शतमखादिभिः सततमेव यत्प्रार्थ्यते
तदेव खलु गोकुले पशुभिरञ्जसा भुज्यते ॥ ४ ॥

किं बहुना,

यत्सार्वभौमविषये च सुरालये च
पद्मासनस्य निलयेऽपि हि यद्विभाति।
सौख्यं तदेव यदुदेवपदारविन्द-
संदर्शिनां लुठति पादतलेषु गोष्ठे ॥ ५ ॥

तापसानां तपःफलं च प्रत्यक्षमनुभूयते। तथाहि,

नवाम्बुधरनीलिमस्फुरदलौकिकाङ्गद्युति-
स्तडिद्विमलपीतिमाम्बरनितम्बसंशोभितः।
मनोभवमनोरमःसुखमयः सरोजेक्षणः
क्षणं क्षणमहो महासुकृतिभिः समालोक्यते ॥ ६ ॥

**भिक्षुकः**—अहो बत महतः सौख्यात्प्रच्युतोऽसि, परं त्वेकं पृच्छ्यते। किमिति भवता गोकुल एव क्वचिदवस्थाय वृष्ट्युपद्रवः स्वात्मना न परिहृतः।

**तापसः**—अन्यादृशी खल्वेषा वृष्टिः।

**भिक्षुकः**—कथं कथम्।

**तापसः**—श्रोतव्यम।

उद्भूताः परितो दिगन्तमरुतो भूमीरुहाणां मुहुः
शाखान्दोलपूर्वकं विदधिरे निर्मूलनं पादतः।
नष्टं पक्षिकुलं च धूलिभिरथ भ्रष्टं च तेजो रवेः
क्लिष्टं काननवर्ति गोधनमथ व्यामोहमेवागमत् ॥ ७ ॥
संपूर्णं धरणीतलं च गगनं चेदं रवेर्मण्डलं
मग्नं धूलिमये महाजलनिधौ केनापि नादृश्यत।

अन्धे सन्तमसे सबन्धुजनतानालोकनेनाभव-
न्मातर्मातुलतातभामभगिनीत्याक्रोशकोलाहलः ॥ ८ ॥

**भिक्षुकः**—ततस्ततः ।

**तापसः**—आत्यन्तिकं प्रधावन्तो जीमूता नीलकान्तयः ।
कुञ्जरा इव पाथोदाः पताका इव विद्युतः ॥ ९ ॥

ततश्च, विद्युल्लतानां समुदञ्चितेषु
तथा घनानामतिगर्जितेषु ।
वृष्टिर्यथासीद्विपुला जलानां
तथा न कुत्रापि कदापि दृष्टा ॥ १० ॥

**भिक्षुकः**—ततस्ततः ।

**तापसः**—स्फाराभिर्वर्षधाराभिर्जाता जलमयी मही ।
ततो बहूनां प्रलयारम्भसंभावनाऽभवत् ॥ ११ ॥

**भिक्षुकः**—आर्य तादृशे समये गोकुलवर्तिनां वृतान्तं ज्ञातुमिच्छामि

**तापसः**—अहो ! दुःखान्तरं स्मारयसि, किं वक्तव्यम् ।
वृष्ट्या सन्ततया विनष्टशिबिरान् ध्वान्ताखिलोपस्करान्
शीतस्यातिशयेन वेपथुयुतान्प्रत्यङ्गरोमाञ्चितान् ।
नन्दादीन् हहेतिदीनवचनान् प्रम्लानपद्माननान्
क्लिश्यद्बालकवत्सवृद्धवनितान् कः शक्नुयाद्वीक्षितुम् ॥१२॥
इदमप्यपरमस्माकं तत्रानवस्थाने निदानम् ।
धेनूनामथ वत्सानां शिशूनां च मृगीदृशाम् ।
आक्रन्दनरवाः केन श्रोतुं शक्या मनस्विना ॥ १३ ॥

**भिक्षुकः**—ततस्ततः ।

**तापसः**—अतिवृद्धा गोपाङ्गनाः ।

चन्द्रिकाविशदशोभिकुन्तलाः
शीलतश्चपलकर्णकुण्डलाः ।
वृष्टिभिश्च परिपीडिता भृशं
प्रोचुरेत्य ननु नन्दसुदरीम् ॥ १४ ॥

**भिक्षुकः**—किं किमूचुः ।

**तापसः**—इदमूचुः । अये नन्दसुन्दरि

एते मिलन्ति पुरुषाः परुषस्वभावा
यत्किंचिदेव रचयन्ति विदन्ति नैव ।
सिद्धं त्यजन्ति कुलधर्ममतो भजन्ति
सद्यः सुखेतरफलानि किलेदृशानि ॥ १५ ॥

अत उपयाचितकं विधीयताम् ।

**भिक्षुकः**—ततः किमुक्तवती यशोदा ।

**तापसः**—इदमुक्तवती । आर्या आज्ञेति चुलुकोदकं गृहीत्वा

शक्रोऽत्र तुष्यतु विनश्यतु वृष्टिरेषा
लोकोऽस्तु मङ्गलगतः सकलः सुखेन ।
उद्दिश्य तं कुलिशहस्तमतिप्रशस्तान्
मेषादिमांसलपशूनथ मारयिष्ये ॥ १६ ॥

**भिक्षुकः**—ततः किमुपशमः कश्चिद् वृष्टेः ।

**तापसः**—दूरेणोपशमवार्ता, उत्तरोत्तरं वृद्धिरेव वृष्टेः ।

**भिक्षुकः**—अहो उपयाचितकमप्यप्रमाणीकृतम् ।

**तापसः**—प्रतिकूले नृणां काले किं कुर्यादुपयाचितम् ।
अविप्रदीप्तदहने यथैव चुलुकोदकम् ॥ १७ ॥

किंच, यद्युपयाचितमेतत्फलति जनानामभीप्सिते काले ।
तर्हि, कः स्यात् त्रिजगतिरङ्कः स्यात्कस्य लोकस्य चातङ्कः ॥ १८ ॥

**भिक्षुकः**—ततस्ततः ।

**तापसः**—गोकुलमेवं व्याकुलमवश्यमालोक्य निर्गता एव ।

मुकुलीभवति सरोजे सपदि चलन्त्येव रोलम्बाः ॥ १९ ॥

अधुना तु, स्मारं स्मारं गोकुलस्यापचारं
वारं वारं खिद्यते मानसं नः ।
किं वा कुर्मः कुत्र वाथ प्रयामः
को वागन्ता को भवेत्खेदहन्ता ॥ २० ॥

( तावन्नेपथ्ये ) विमलकोमलपाणितले गिरिं
विपुलमाकलयन्नथ लीलया ।
सकलगोकुलवल्लभ एव यः
सकलमेव जुगोप स गोकुलम् ॥ २१ ॥

**तापसः**—कोऽयं शुभवार्तामृतेन सिञ्चन्नस्मच्चेतःसन्तापमुत्सारयति । ( निपुणतरमवलोक्य ) अहो विदितं, सोऽयं गोकुलनिवासिनन्दनन्दनप्रसादासादितपरमवैभवः सदानन्दः, तदेनं सविवरणं समाचारं पृच्छामि । ( इत्यग्रत उपसृत्य )

अये सदानन्द

त्वदाननशरच्चन्द्रनिर्यद्वचनचन्द्रिका ।
सन्तोषयति सर्वेषां चेतःकुमुदमण्डलीम् ॥ २२ ॥

**सदानन्दः**—नमस्तापसेभ्यः ।

**तापसः**—चिरं नन्द ( इत्यभिनन्द्य ) सदानन्द सकलगोकुलव्याकुलता त्वस्माभिरनुभूतैव । ततः किं वृत्तं कथं वृत्तं वदेतत् श्रोतुमिच्छामः ।

**सदानन्दः**—श्रूयतां सततवृष्टिभिरुपप्लुतगोकुलमवलोक्य नन्दादयो मिथो मन्त्रणामारेभिरे । ( तेषु-)

**एकः**—यः सर्वदा सुरपतिः परिपाति गोष्ठं

सोऽयं तु संप्रति भृशं प्रतिकूल एव ।

कं वा वयं सुनिपुणं शरणं व्रजेम

यो वारयेदिममुपद्रवमस्मदीयम् ॥ २३ ॥

( तेषु-) **अन्ये**—अमरेन्द्रस्य यः स्थाने नगेन्द्रः परिपूजितः ।

शरणं तत्र यास्यामो गोवर्धनमतन्द्रिताः ॥ २४ ॥

स हि पूजनावसरे,

इन्दीवरदलश्यामः कामादपि च सुन्दरः ।

भूत्वा, वरदोऽस्मि प्रसन्नोऽस्मीत्यागत्य योऽब्रवीत्स्वयम् ॥ २५ ॥

तदयमेव वरः प्रार्थनीयः, यदीन्द्रकृतोपद्रवेभ्यो रक्षणम् ।

( अथ-) **अपरः**—सत्यं वरः प्रार्थनीयः, किं तु

अधुना प्रार्थना कार्यतायामाविर्भवेन्न वा ।

आविर्भूतोऽप्यसौ वृष्टेर्गोप्तुं नःशक्नुयान्न वा ॥ २६ ॥

एवं च सति ।

एकः क्लृप्तो हेतुरन्यश्च कल्प्यः

प्राहुर्याायान्पूर्व एवेति सर्वे ।

तस्मादस्मद्क्लेशनाशैकशीलः

श्रीकृष्णोऽयं जायतां नः शरण्यः ॥ २७ ॥

अपि च, संप्रार्थितः सपदि सर्वमिदं सुदुःखं

संनाशयेन्निजजनस्य किमत्र चित्रम् ।

अप्रार्थितोऽपि हि बकीबकधेनुकादी-

न्सद्यो व्यनाशयदशेषजनावनाय ॥ २८ ॥

**इतरे**—गोवर्धनस्यैव सुसन्निधाने

धेनुःप्रणिन्ये तृणचारणाय ।

पूर्वं तु तत्रैव चलन्तु पश्चात्

यः कोऽपि नः पातु हरिर्गिरिर्वा ॥ २९ ॥

समुच्चयो वा को विरोध इति सर्वे गोवर्धनं प्रति चलिताः ।

**तापसः**—ततस्ततः ।

**सदानदः**—समुच्चयपक्ष एव, किंतु हरिः प्रधानं गिरिर्गुण इत्याव-देयन् सानन्दम्,

हरिरथ परिपीड्यमानमेनं

जनमवलोक्य भृशं दयापयोधिः ।

अतिशयमृदुलेन मेघनीलः

करकमलेन महीधरं दधार ॥ ३० ॥

**भिक्षुकः**—अहो !

सप्तसंवत्सरो बालः कालादपि महाबलः ।

यत्सौकुमार्यनिलयः क करः क महीधरः ॥ ३१ ॥

**तापसः**—सदानन्द करकमलेनेत्येकवचनं प्रयुज्यते, उद्धरणं तु महागिरेर्द्वाभ्यां कराभ्यां भवेत् ।

**सदानन्दः**—नहि नहि करकमलमपि दूरं विप्रकर्षेणोक्तम् । किंतु,

वेत्रेण दक्षिणकरे कलितेन मूले

भूमौ धृतेन विलसन्नति सुन्दराङ्गः ।

वामैकहस्तकृतमुष्टिकनिष्ठिकायाः

प्रोद्यन्नखेन गिरिमुद्यतवान्सुखेन ॥ ३२ ॥

**तापसः**—ततस्ततः ।

**सदानन्दः**—येनैवोद्धृतावानेनं तेनैव धृतवानयम्।

सप्तसंवत्सरो बालः सुमहान् स महागिरिः ॥ ३३ ॥

अपिच, उद्धृतः सपदि पूतनारिणा

सर्वतःसकलखेदहारिणा।

कृत्स्नगोपजनमस्तकोपरि-

च्छत्रवत्परिधृतः स भूधरः ॥ ३४ ॥

**तापसः**—तदा गोकुलजनानां कः समाचारः।

**सदानन्दः**—ते हि गिरिवरसमुद्धरणसमुद्भवे महति भूविवरे मुरारिवचसैव सस्त्रीवृद्धकुमारं सधेनुवत्सं च प्रविश्य,

अनाचरितभोजनाद्यखिललौकिकप्रक्रिया

घनादपि च जीवनात्स्वरसपूतनारिप्रियाः।

अनाकलितलोचनाम्बुजनिमेषमालोकयं-

स्तदाननमुदाननाः सपशुगोपगोपाङ्गनाः ॥ ३५ ॥

किंच, सरोजसमलोचनं सरलनासिकं सुस्मितं

सितांशुपरिमण्डलं श्रुतिसमुल्लसत्कुण्डलम्।

तदाननमुदाननाः समवलोकयन्तो जना-

स्तदा सुखपयोनिधावतिनिमग्नभावं दधुः ॥ ३६ ॥

**तापसः**—ततस्ततः।

**सदानन्दः**—गोवर्द्धनोद्धरणश्रीमूर्तिस्मरणरसिकान्तःकरणतया क्षणं व्यग्रतामनुभूय तपस्विन् तस्मिन्समये परो वृत्तान्तः प्रक्रान्तः।

**तापसः**—कः कः।

**सदानन्दः**—श्रीमत एतस्य केऽपि वयस्याः,

क सौकुमार्यं वहनं क चाद्रे-

र्बाल्यं वयः काध्यवसाय एषः।

न ज्ञायते किं कुरुते कथं वा

इति ते सचिन्ता इव भूत्वा,

तथापि साहाय्यकमस्य कुर्मः ॥ ३७ ॥

इत्याख्याय युगपदेव

केचित्करैरथ परे तु शिरोभिरन्ये

स्कन्धे गिरिं परिकलय्य हरिं समेयुः ।

श्रीकान्त श्रान्तोऽसि चिरकालं गिरवरधारणेन, तदधुना

विश्रान्तिमेव समुदञ्च विमुञ्च शैल—

मस्माभिरेष सकलैः सबलं धृतोऽस्ति ॥ ३८ ॥

**तापसः**—ततस्ततः ।

**सदानन्दः**—अथापरे वयस्या अन्तरेणावस्थाय सेर्ष्यम्,

भवद्भिरस्य साहाय्यं किमेतादृशि कर्मणि ।

नक्षत्रैरिव पूर्णेन्दोरन्धकारनिवारणे ॥ ३९ ॥

अपिच, यदा यशोदापरिदृष्टमेष

त्रैलोक्यमन्तर्वदने दधार ।

तदापि साहाय्यकमस्य किं वा

भवद्भिरेवाचरितं वयस्याः ॥ ४० ॥

**तापसः**—तदा किमुक्तो वा भगवान् ।

**सदानन्दः**—न किमपि किं तु,

इति खलु निखिलनिवासः सखिजनवचनं निशम्य गोपीशः ।

करकलिताम्बर एव स्मितमातेने दयाजलधिः ॥ ४१ ॥

**तापसः**—ततस्ततः ।

**सदानन्दः**—एवं सप्तापि दिनानि तिष्ठन्

दयोदधिर्दीनजनेषु देवः ।

स्ववक्त्रलावण्यविलोकनेन
स्वं लोकमप्याययति स्म सर्वम् ॥ ४२ ॥

किंच, तदा,

तद्वक्त्रमेकं लोकानां चकर्ष नयनावलिम् ।
सरोजमिव रोलम्बश्रेणीं स्वरसरागिणीम् ॥ ४३ ॥

अथवा, निमीलनोन्मीलनशीलमब्ज-
मङिधत्त्यालम्बि शशाङ्कबिम्बम् ।
किमस्ति तद्वस्तु महीतलेऽस्मिन्
यदाननेनास्य तुलापदं स्यात् ॥ ४४ ॥

तत्रापि, तेषां सन्तोषसन्दोहः शौरेः केवलया दृशा ।
सम्पूर्णमपि लावण्यमन्यथा सिद्धिमन्वभूत् ॥ ४५ ॥

तथाहि, अन्नं विना ते सलिलं विना च
सर्वेऽपि सप्तापि दिनानि तस्थुः ।
तत्रैव पीयूषमिवावहन्ती
गोपालबालस्य दृगेव मूलम् ॥ ४६ ॥

**भिक्षुकः**—अहो भगवद्दृशः सौम्यता सुखकरी ।

**तापसः**—अस्य एव वक्त्रं तापविनाशकारि च । तथाहि,

शैलेऽस्मिन् घनवृष्टिपीडितजनत्राणाय पाणौ धृते
यासीत्सप्तदिनानि गोकुलजनानन्दाय गोविन्ददृक् ।
सा चेदञ्चति किंचिदेव कुटिलां सत्तां समालम्बतां
क्वेदं भूमितलं क्व चापि सलिलं कुत्रानलः कानिलः ॥ ४७ ॥

**सदानन्दः**—आस्ताम्, तमिमं गोकुलवृत्तान्तं मथुरानगरवर्त्तिसुहृज्जने निवेदयिष्यामि ।

**तापसः**—अहमपि तत्रैव नित्यं सन्निहितो हरिरिति कियन्तं कालं तपसा परिकलयिष्यामि ।

**भिक्षुकः**—अहमपि त्वत्परिचर्यया स्थास्यामि

( इति निष्क्रान्ताः सर्वे )

इति श्रीमदापदेवसूनुनानन्तदेवेन विरचिते मनोऽनुरञ्जनाभिधाने हरिभक्तिनाटके तृतीयोऽङ्कः समाप्तः ।



# अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति शक्रः कामधेनुश्च )

शक्रः—( प्रणम्य ) मातः किमिति गोकुलसमीपमागम्यते ।

कामधेनुः—परमप्रेमपाथोधिं मनोभवमनोरमम्

श्रीनन्दनन्दनं द्रष्टुं कस्य न स्यान्मनोरथः ॥ १ ॥

शक्रः—धन्यासि तनुविन्यासशालिनं यदुनायकम् ।

या द्रक्ष्यसि विना क्लेशमधुना मधुनाशनम् ॥ २ ॥

कामधेनुः—शक्र भवतापि गोकुलसमीपमागम्यते, कात्र क्लेशासंभावना ।

शक्रः—सत्यं समीपमागम्यते, तथापि भयेन व्यवधीयते ।

कामधेनुः—किमत्र भयम् ।

शक्रः—अस्य देवस्य सामर्थ्यमनालोच्यैव केवलम् ।

अकारि विपुला वृष्टिरस्माभिर्गोकुलोपरि ॥ ३ ॥

परं तु, करपङ्केरुहेणैव गिरिमुद्धृत्य लीलया ।

पूतनारातिना त्रातं सकलं गोकुलं तदा ॥ ४ ॥

मखासङ्गसमुद्भूतप्रभूतक्रोधधार्यहम् ।

यत्कृतं व्रजनाशाय तन्नो नाशाय जायते ॥ ५ ॥

कामधेनुः—अहो महानविवेकः । यदेतादृशमनर्थमुत्पाद्य पुनस्तत्संमुखमेव गम्यते, त्यज्यते च सुकृतभोज्यं स्वाराज्यं तत्,

अधुनापि परावृत्य गन्तव्यं वचसा मम ।

तत्स्थानेऽथ निजस्थाने स्थातव्यं यत्र कुत्र वा ॥ ६ ॥

**शक्रः**—विरोधमेतेन समं विधाय
स्थातुं न शक्यं स्वपदेऽपि देवि ।
सिंहं परिक्षोभ्य गजो निजेऽपि
स्थाने वने किं कुशलं समेयात् ॥ ७ ॥

तस्मादेतच्चरणसरोजयोः शरणमवगन्तव्यमित्ययमेको भयनिर्मोकोपाय इति गोकुलमागम्यते ।

**कामधेनुः**—एवं तर्हि साम्राज्यमेव ।

**शक्रः**—भयशङ्काकलङ्कस्तु न मुञ्चति ।

**कामधेनुः**—सर्वथापि न भेतव्यं मन्तव्यं वचनं मम ।
गन्तव्यं शरणं शौरेः स्थातव्यं स्वपदे सुखम् ॥ ८ ॥

प्रसिद्धं ह्येतत ।

यथा हि यदुनाथस्य बल्लव्यः शरणं गताः ।
न रमापि न च ब्रह्मा न वोमारमणस्तथा ॥ ९ ॥

तदेहि । ( उभौ किंचिदग्रेऽभिसरतः )

**शक्रः**—( पुरतोऽवलोक्य स्वगतम् )

अतीव श्लाघनीयाद्य सहस्रनयनी मम ।
यत्पश्यति घनश्यामं कामादपि मनोरमम् ॥ १० ॥

**कामधेनुः**—( गोविन्ददर्शनानन्दमनुभूय स्वगतम् )

एतैरहो सकलगोकुलवासिलोकैः
पुण्यानि कानि विहितानि न तानि विद्मः ।
नक्तं दिवापि च मनस्यपि चक्षुषोश्च
येषां पुरः स्फुरति पङ्कजपत्रनेत्रः ॥ ११ ॥

**शक्रः**—( प्रकाशम् ) अये ऽपत्रपयति ।

वृष्टिर्विनष्टा तपनः प्रसन्नो
जातं प्रशस्तं च नभः समस्तम् ।
इत्थं मुरारेर्वचसैव सर्वे
गोपा बहिर्यान्ति गिरीन्द्रगर्तात् ॥ १२ ॥

अन्यच्च, करकमलधृतेऽस्मिन् सर्वथैषां शरीरे
न विपुलजलवृष्टेर्बिन्दुरेकोऽपि लग्नः ।
स्वस्थाने, अपि च पुनरनेन स्थापितस्याधुनाद्रे-
रणुरपि न तु सन्धिर्दृश्यते पश्य चित्रम् ॥ १३ ॥

**कामधेनुः**—विचित्रमेवास्य चरित्रं न ज्ञायते । तथाहि,

कथमुधृतवान् शैलं कथं च धृतवानयम
अव्यक्तसन्धिरचनं कथं च निदधे पुनः ॥ १४ ॥

**शक्रः**—( हस्तेन परिदर्शयन् ) पश्य पश्य, बालकानामस्मिन्प्रेमातिशयम् ।

स्वपदे क्षितिभृति निहिते सखिनिचयः पाणिपङ्कजं शौरेः ।
धृत्वा धृत्वा पश्यति विस्फोटाशङ्कितः सपदि ॥ १५ ॥

एतस्यापि चैतेषु प्रेमातिशयं पश्य ।

श्रान्तोऽसि कञ्जनयन क्षणमास्व कुर्मः
संवाहनं तव तनौ पिब तोयमेतत् ।
इत्थं वयस्यवचनैः श्रमवर्जितोऽपि
सन्तोषमेषु वितनोति तदेव कुर्वन् ॥ १६ ॥

**कामधेनुः**—यशोदां पश्य ।

आनन्दजातजलबिन्दुपरिप्लुताक्षी
स्नेहस्नुतस्तनपयःप्लुतकञ्चुकी च ।

धावन्त्युपेत्य परिरभ्य न तेन माति
लोकत्रयेऽपि सुदती सुतसंभ्रमेण ॥ १७ ॥

**शक्रः**——अहो महाभाग्यं भाति, प्रांशुरसौ सप्तवर्षशिशुम्-
उपानीय मुदा नन्दःसदानन्दमयं हरिम् ॥
बाहुभ्यां परिरभ्यामुमुपधावति मुहुर्मुहुः ॥ १८ ॥

**कामधेनुः**——शक्र श्रुतं त्वयेतरजनवचनम् ।

**शक्रः**——न श्रुतम् । यतः,
सौन्दर्यसिन्धुगोविन्दसंदर्शनमुपेयुषाम् ।
चक्षुषामेव साचिव्यं चेतः सांप्रतमञ्चति ॥ १९ ॥

तदुच्यताम्

**कामधेनुः**——श्रूयताम्, यत्कमलदलादप्यतिशयकोमलं करकमलं, तेनाधुना सप्तदिनानि गोवर्द्धनाद्रिर्धृतः, तत्किं पूर्वपूजितो गिरिवर एव कोमलतामालम्बतैव, किं वा गुरुतरशकटविपरिवर्त्तनवत्तेन चरणतलेनैव गिरिवरधारणाय करतलेनापि काठिन्यमवलम्बितम्, तन्न जानीम इति ।

**शक्रः**—मातः किमेतयोः पक्षयोस्तत्वम् ।

**कामधेनुः**—पूर्वपक्षः पूर्वपक्ष एव, अकृत्स्नत्वात् । उत्तर एवोत्तरः, तत्रैकत्र क्रमोऽन्यत्र प्रतिसंधीयते । क्लृप्तं चातिकोमलस्यापि चरणकमलस्य शकटपरिवर्तने काठिन्यम् । किं च विरुद्धमपि
काठिन्यं कोमलत्वं च सदैव यदुनन्दने ।
तेजस्त्वं शीतलत्वं च यथैव शशिमण्डले ॥ २० ॥

तथाहि, यत्स्पर्शमात्रेण सुरारिगात्रे
संजायते वज्रशताभिघातः ।

एतादृशं काठिन्यम्, कोमलत्वं तु

गोपीजनस्तं कठिनस्तनाभ्यां
न गाढमालिङ्गति शङ्कितः सन् ॥ २१ ॥

**शक्रः**—प्रबुद्धवयस्यान् पश्य पश्य

एकश्छत्रं चामरं कोऽपि धत्ते
कृष्णस्याग्रे नृत्यमन्यो विधत्ते।
स्वच्छादर्शं दर्शयन् कोऽपि गोपः
प्रेम्णा देवं सेवते पूतनारिम् ॥ २२ ॥

तथा, वपुषि लिम्पति कोऽपि चन्दनं
कुसुमदामभिरर्चयत्यमुम्।
सुरभिपुष्पविनिर्मितनिर्मलं
व्यजनमारुतमातनुते परः ॥ २३ ॥

**कामधेनुः**—अनेकजन्मान्तरसंचयानां

पुण्योच्चयानां परिपाक एषः।
यत्प्रीतिपूर्वं परमात्मनोऽपि
संसेवनं साधु मुदाचरन्ति ॥ २४ ॥

यतः, विद्या भवेदिह भवेदपि भूरिलक्ष्मीः
त्रैलोक्यराज्यमपि किं गणयेत्कदाचित्।
अजन्मनामविनिर्मितपुण्यपुञ्जमन्तरेण,
संसारिणां सपदि खेदविनाशनं तु
संसेवनं मुररिपोर्न भवेत्कदापि ॥ २५ ॥

**शक्रः**—मातराश्चर्यम्।

सौवर्णभूषणविभूषितरम्यरूपाः
क्षौमाम्बराञ्चलपयोधरकुण्डलाश्च।

पाणिस्फुरत्कनकभाजनरत्नदीपा

गोपाङ्गनास्त्वरितमत्र कुतो मिलन्ति ॥ २६ ॥

अपिच, अनेकपुण्योच्चययाचिताय

श्रीकृष्णसान्निध्यसुखाय सर्वाः ।

धावन्ति वेगेन परस्परस्य

पुरःपुरः पङ्कजपत्त्रनेत्राः ॥ २७ ॥

( पुनःसादरमवलोक्य )

प्रादुर्भवत्यथ महानिह दुन्दुभीनां

नादो मृदङ्गपणवानकगोमुखानाम् ।

किं चायमञ्चति मनोज्ञतमः पुरस्ता-

न्माधुर्यसिन्धुरिव वेणुरवः शिशूनाम् ॥ २८ ॥

अये, समुत्सवोऽयं गोकुलजनस्य दृश्यते ।

**कामधेनुः**—उचितमेवैतत्, यदमी प्रलयकालीनाया इव विपुलाया जलवृष्टेर्जीविताः । वस्तुतस्तु,

भुक्तं न सप्तापि दिनानि किंचिद्-

नो वा वनान्ते निपीतमस्ति च ।

सर्वाय चाधस्तु गिरेर्मुरारि-

र्मुखारविन्दश्रियमेव धत्ते ॥ २९ ॥

तदस्माकं मूर्तिमद्रस इतिप्रतिपन्नाः सर्वेऽपि गोकुलजनाः श्रीकृष्णप्रेम्णि समुत्सवमासते ।

**शक्रः**—मातः सत्यमेतत्, पश्य पश्य ।

शुभासने विजयते गरुडासनेऽयं

गोपीजनोऽपि परितो मुदितो विभाति ।

किंच, मुक्तान् धृतान् किरति शौरिशिखाप्रदेशे

नीराजयत्यपि सुरत्नमयैः प्रदीपैः ॥ ३० ॥

**कामधेनुः**—गोपीजनस्याशीःप्रयोगोऽपि दृश्यते ।

एतादृशं ननु गोकुलवर्तिलोकं
त्रायस्व संततममुं समुपद्रवेभ्यः ।
गोविन्दराज तव चारुमुखारविन्द-
दृष्टिं न जातु विजहातु विलोचनं नः ॥ ३१ ॥

**शक्रः**—एके गायन्ति गोविन्दमन्ये नृत्यन्त्यथापरे
पुनः पुनः प्रसूनानि किरन्ति कमलाधरे ॥ ३२ ॥

( कर्णं दत्वा स्वगतम् )

किमिदममृतमेव प्रच्युतं देवलोकात्-

( विमृश्य ) नहि नहि,

इह रुचिरधिकास्ते वस्तुतोऽमर्त्यभोगात् । ( पुनर्विमृश्य )
विदितमथ मयेदं माधवःसाधु वेणुं
क्वणयति भुवनानां साधयन् संसुखानि ॥ ३३ ॥

( पुनःसानन्दम् )

सर्वोत्सवेषु परमोत्सव एष एव
सद्यः समुल्लसति सौख्यसुधासमुद्रः ।
गोपीषु गोववलयेषु च गोपिनं यो
यन्मञ्जुमञ्जुमुरलीरवमातनोति ॥ ३४ ॥

( कामधेनुं प्रति प्रकाशम् )

सर्वोत्तमेति प्रथितापि कामं
सुधामुधाभावमुपागतैव ।
यत्संप्रति श्रीपतिनिर्मितेयं
विभाति गीतिर्नवमञ्जुरीतिः ॥ ३५ ॥

**कामधेनुः**—शक्र एवमेव, अन्यच्च

हृदयमिह कृतार्थं चिन्तनेनैव पूर्वं
नयनमपि कृतार्थं दर्शनेनैव शौरेः।
मधुरमधुरमेतद्वेणुगीतं निशम्य
श्रवणमपि कृतार्थश्रेणिसौख्यं दधाति ॥ ३६ ॥

**शक्रः**—अये समुत्सवपरम्परैव परिदृश्यते, कथमस्माकमेतन्नमस्कारावसरः।

**कामधेनुः**—अपसृता एवैते गोपालाः, पश्य,

सहैव गोभिः सह गोपिकाभिः
सहैव बालैः सह वत्सजालैः।
पुनःपुनर्मङ्गलमूर्तिमेनं
विलोकयन्तो व्रजमाव्रजन्ति ॥ ३७ ॥

**शक्रः**—कथमयं स्वयं न गच्छति।

**कामधेनुः**—सर्वज्ञशिरोमणिः खल्वयम्, अस्मत्समाधानमकृत्वा कथं गच्छेत। तदेहि देवदेवस्य दृष्टिपथमवतरावः।

**शक्रः**—सापराधानामस्माकमकस्मात्प्रभुदृष्टिपथावतरणे क्रोधाविर्भावः संभावितः, तदग्रेऽभिसर, अस्मदीयं शरणागतत्वमस्मिन्निवेदय।

**कामधेनुः**—तथा। ( इति किञ्चिदग्रेऽभिसृत्य श्रीकृष्णमवलोक्य सानन्दं स्वगतम् )

संसाराह्वयकालियो द्वयधिया हालाहलज्वालया
मद्बुद्धिं यमुनां विनाशमधुना नेतुं सयत्नं चरन्।
दूरेणैव दरेण धावनमरे संसेव्यतामादरा-
दत्रोदञ्चति दुष्टदर्पदमनो धीमोहिदामोदरः ॥ ३८ ॥

अथवा, भक्तिहेतुतया तिष्ठतु भवान्। किन्तु,

संसारसागर महाविकलत्वहेतून्
रागादिकान् समुपसंहर दुस्तरङ्गान्।

नो चेदगस्तिचुलकोदकता बताद्य
श्रीकृष्णकोपवशतो भवतो भवित्री ॥ ३९ ॥

श्रीकृष्णः—( तावत् प्रविश्य स्वगतम् )
यशसा सुरभिः सेयं सुरभिः परिदृश्यते ।
सेविता सर्वकामानां पूरणी दुःखहारिणी ॥ ४० ॥

कामधेनुः—( उच्चैः ) तमालश्यामलरुचिं वृन्दावनविहारिणम् ।
नमामि परमानन्दं पूर्णचन्द्रमलौकिकम् ॥४१॥

श्रीकृष्णः—(सस्मितम्) आशिषानन्दनीये मयि किमिदं नमामीति ।

कामधेनुः—नन्दनन्दनोऽपि पुराणपुराणस्त्वं वन्दनीयोऽसि । तथा
वन्दनीयोऽसि सर्वेषां नन्दनीयोऽसि चाशिषा ।
आशास्यमेव हि शुभं वस्तुनि प्रेमसद्मनि ॥ ४२ ॥

श्रीकृष्णः—देवि प्रसिद्धमेतद्धि यद्वृद्धानां मनस्विनाम् ।
येषु केष्वपि तोकेषु लोके प्रेम प्रजायते ॥ ४३ ॥

कामधेनुः—( परिहासेन )
सत्यं बालेषु वृद्धानां प्रेमातीव प्रजायते ।
लीलयैव यतो बालाः कलयन्ति करे गिरिम् ॥ ४४ ॥

श्रीकृष्णः—( सस्मितम् ) मातरीप्सितविषय आज्ञा प्रदीयताम् ।

कामधेनुः—आस्तां तावदस्मदभीप्सितं प्रथमत एतदवधारणीयं शरणागताय पुरुहूतायाभयं दीयताम् ।

श्रीकृष्णः—मदीयाभयदानस्य हेतुभूतमिदं द्वयम् ।
भवदीयं वचो वापि शरणागतताथ वा ॥ ४५ ॥

शक्रः—( निःशङ्कमग्रत उपसृत्य स्वगतम् )
नेत्रालि गोपालशरीरशोभा-

पथं प्रपन्नासि न यासि पारम् ।

प्रत्यङ्गम्,

अगम्यलावण्यमहागिरीणा-
मारोहणैरप्यवरोहणैश्च ॥ ४६ ॥

श्रीनन्दनन्दनमनोज्ञमुखारविन्द-
संदर्शनं विशदमञ्चतु मे कथंचित् ।
इत्थं सहस्रनयनावलि मानसं तु
पर्याकुलं समभवन्मम सर्वकालम् ॥ ४७ ॥

( पुनः किंचिदग्रत उपसृत्य )

सत्यं सहस्रनयनानि कविप्रवीणै-
र्यूयं सरोरुहतुलास्वधिरोपितानि ।
दृष्टे तु निर्मलमुरारिमुखारविन्दे
युक्तं मधुव्रततुलास्वधिरोहणं वः ॥ ४८ ॥

( पुनः स्वगतम् ) अपूर्वैव कथमवस्था प्रादुर्भवति । तथाहि,

संपूर्णापि तनुर्विभाति पुलकैरेखाङ्किता चक्षुषां
श्रेणी किंच गलत्प्रमोदसलिलव्याकीर्णपद्मद्वया ।
श्रीगोविन्दपदारविन्दविलसत्सौन्दर्यसंदर्शने
चित्तं चञ्चलमप्युदञ्चति चिदानन्दाम्बुधावेव तु ॥४९॥

( पुनरग्रत उपसृत्य भुवि सष्टाङ्गं प्रणम्य करकमलेन प्रमोदाश्रु परिमार्जयन् श्रीकृष्णं प्रति )

महाराज, यज्जीवनं यदपि देहगतं क्षमत्वं
यच्चेन्द्रियेषु सकलेष्वपि पुष्कलत्वम् ।
तत्संपदा सह ददाति य एष चित्ते
न स्मर्यते तदयमेव दृढोऽपराधः ॥ ५० ॥

प्रत्युत, उपकर्तरि यत्तस्मिन्नपकर्त्तुं प्रवर्तनम्
सर्वेषामपराधानामपराधो महानयम् ॥ ५१ ॥

यद्वा नायमपराधः किं तु मूढतैव । यतः,

यः सर्वदा सकलसिन्धुसमप्रमोदः
खेदो न तस्य खलु यत्नसहस्रतोऽपि ।
मध्याह्नवर्तिनि महौजसि सूर्यबिम्बे-
प्रादुर्भवेत्किमु तमःकलुषं कदापि ॥ ५२ ॥

**श्रीकृष्णः**—किमिति मूढता, गोकुलजजनस्तु खेदयितुं शक्य एव,

**शक्रः**—अशक्य एव यतः,

क्षुद्रा अपि प्रभुजना निजसेवकानां
नान्याहितं परिभवं सहसा सहन्ते ।
लोकत्रयाधिपतिरेव दयासमेतः
किं वा सहेत परिखेदनमात्मवर्गे ॥ ५३ ॥

प्रत्यक्षमेव चात्र प्रमाणम । तथाहि,

शौरे शिलाजलवृष्टिनिवारणाय
स्वीयस्य गोकुलजनस्य भवानिदानीम्
कारुण्यतः कमलकोमलपाणिनैव
गोवर्धनं सततसप्तदिनं दधार ॥ ५४ ॥

परन्तु श्रीभगवन् परिचयेनैकमुच्यते, यदि गोवर्द्धनमुद्धृत्य गोपजनाः रक्षिताः किं तावता,

त्वदीयपदसेवने ननु यदीयकालो गत-
स्तदीयपरिपालनं किमु कृपालुतामावहेत ।

किंतु, इयं तव कृपालुता यदपराधिनां मादृशा-
महो शुभदृशा मुहुः सुखमतीव संतन्यते ॥ ५५ ॥

**कामधेनुः**—( शक्रं प्रति ) शतमप्यपराधानां सहस्रमपि वा कृतम् ।
शरणागतलोकस्य नालोचयति केशवः ॥ ५६ ॥

( श्रीकृष्णं प्रति )　अहो सुकृतसंततिः सकलगोकुलस्थायिनां
परिस्फुरति निर्मला विविधजन्मभिर्निर्मिता ।
क सत्तम चतुर्मुखप्रमुखदेवतासेविता
क चापि पशुपालनप्रभृतिकर्मसु प्रेष्यता ॥ ५७ ॥

**श्रीकृष्णः**—( सस्मितम् ) मातराज्ञाप्यताम् ।

**कामधेनुः**—न काप्याज्ञा, भवदभिषेकाभिलाष एव मनसि परिस्फुरति ।

**श्रीकृष्णः**—( सस्मितम् )

सप्ताहं गिरिवहनश्रमापहर्तुं तवाभिलाषोऽयम् ।
जानामि कामधेनो मयि भवति स्निग्धचित्तेति ॥ ५८ ॥

**कामधेनुः**—यस्य,　ब्रह्माण्डभाण्डशतकोटिनिबद्धभाराः
प्रत्येकरोमकुहराः परितः स्फुरन्ति ।
तस्य श्रमः कथमिवाद्रिधृतौ तथापि
दिव्योत्सवो भवतु गोपकृतोत्सवान्ते ॥ ५९ ॥

**श्रीकृष्णः**—किमशक्यं कामधेनोः, यतः
वितरन्ति कल्पतरवः सर्वे मिलिताः फलानि यावन्ति ।
तावन्त्येका वितरसि शिरसि विजयसे वदान्यानाम् ॥ ६० ॥

**कामधेनुः**—सर्वेयं तवैव शक्तिः । तथाहि,
अद्भुता त्वद्गता शक्तिरस्मत्सु प्रतिभासते ।
प्रकाशशक्तिरग्निस्था दीपादिस्थापि दृश्यते ॥ ६१ ॥

तदाज्ञा दीयतामभिषेकमारभे ।

**श्रीकृष्णः**—यथा मनसि ।

( नेपथ्ये )

आकाशवायुमिह भावय किं च वायो
वह्निं प्रदीपय हुताशन तापयामः।
तैलं प्रकल्पय सुगन्धि धरे मुरारे-
रभ्यञ्जनं भगवतो भविताधुनैव ॥ ६२ ॥

किंच, सर्वे देवाः सर्वगन्धर्वसङ्घाः
सर्वा नद्यः सिद्धयश्चापि सर्वाः।
कर्तुं सद्यः श्रीरमाकान्तसेवा-
मत्रायान्तु प्रीतिमेव प्रयान्तु ॥ ६३ ॥

**शक्रः**—कोऽयं सर्वभूतानां कृतार्थतामापादयन्नुच्चैरावेदयते। ( ऊर्ध्वग्रीवमवलोक्य ) अहो विदितं कामधेनोरेष संकल्पो मूर्तिमान्।

( प्रविशति संकल्पः, भृत्यवत्प्रणिपत्य )

**संकल्पः**—मातरत्र भवत्याः संसिद्धमेव मनोगतम्।

पश्य, इह खलु सशरीराः सर्वसौन्दर्यपूराः
स्वरसजगदधीशाराधनैकाभिलाषाः।
निखिलजलधिपाथःपूर्णसौवर्णकुम्भान्
शिरसि परिवहन्त्यः सिद्धयः प्रस्फुरन्ति ॥ ६४ ॥

( प्रविश्य सिद्धयो बद्धाञ्जलयो निधाय कुम्भान् )

**सिद्धयः**—मातरेता वयमाज्ञां करवामहै।

**कामधेनुः**—सुगन्धिभिस्तैलैर्भवतीभिरभ्यञ्जनीयो भगवान्।

**सिद्धयः**—( सोत्फुल्लम् )

स्निग्धा च शुभगन्धा च तनुरेषा स्वभावतः।
तथापि स्वसुखायैव तस्याभ्यङ्गो विधीयते ॥ ६५ ॥

**शक्रः**—( स्वगतम् ) अहो भाग्यं सिद्धीनाम्। यत एताः,

एका शिरस्यथ परा हृदये परे तु
बाहौ परा कटितटेऽप्यपरा तु पृष्ठे ।
ऊरुद्वयेऽप्यथ परे पदयोरथान्ये
अभ्यञ्जनं विदधते बकभञ्जनस्य ॥ ६६ ॥

अपिच; अभ्यञ्जनं सकलगोकुलरञ्जनस्य
प्रत्यङ्गसङ्गपुलकाङ्कितपाणिपद्माः ।
प्राचीनपुण्यनिचयैर्ननु सिद्धयोऽमूः
कल्पान्तजीवितफलान्यधुना लभन्ते ॥ ६७ ॥

( कामधेनुं प्रति ) मातः चित्रं त्वेतत् ।
चिरकालं मुरारातेरभ्यङ्गेऽपि यदङ्गनाः ।
न श्राम्यन्ति समुत्फुल्लसरोरुहसमाननाः ॥ ६८ ॥

**कामधेनुः**—न विज्ञातमेतासामश्रमबीजम् ।
क्षणेन यस्य स्मरणेन नश्ये-
दशेषसंसारपरिश्रमोऽयम् ।
आनन्दसंदोहमयस्य सिन्धोः
सेवा कथं च श्रमसाधनं स्यात् ॥ ६९ ॥

**शक्रः**—(पुनरन्या अन्यास्तादृगेव भगवदभ्यञ्जनं विधतीर्विलोक्य स्वगतम्)
भगवत्सेविनामाशु मत्सरो विनिवर्तते ।
अन्यथा कथमन्यासामन्यासामत्र संक्रमः ॥ ७० ॥

**संकल्पः**—देवि, सोऽयं सकलसंसारसारासारविचारवित् ।
नारदः सर्वसंगीतपारगः प्रतिभासते ॥ ७१ ॥

( पाणिना वीणां विरणयन् प्रविशति नारदः सह तुम्बरुणा, प्रणम्य पुरोवर्तिनीं कामधेनुम् )

**नारदः**—मातः आज्ञा दीयताम् ।

**कामधेनुः**—गोविन्दसेवनं विधीयताम् ।

**नारदः**—कंसारिसंसेवनमस्मदिष्टं
तदेव यद्देवि ददासि मिष्टम् ।
तद्गोधनस्वामिनि कामधेनु-
रित्यर्थयुक्तं तव नाम युक्तम् ॥ ७२ ॥

( सिद्धीरुद्वीक्ष्य स्वगतम् )

चेतसि चिन्तितमेतत् श्रीपतिरूपं मुहुः सुखायैव ।
तस्याभ्यञ्जनकरणे सुखमिह कीदृग्मृगाक्षीणाम् ॥ ७३ ॥

प्रसिद्धं ह्येतत्, अतिप्रियपदार्थानां चिन्तनं सुखसाधनम् ।
चिन्तनाद्दर्शनं भूयः स्पर्शनं दर्शनादपि ॥ ७४ ॥

( श्रीकृष्णं प्रणम्य पुनः स्वगतम् )

नैतत्स्वरूपं वचसोऽनुरूपं
गुणेषु कर्मस्वपि नास्ति संख्या ।
अतोऽस्य नामानि मनोहराणि
गायामि मायामनुजस्य विष्णोः ॥ ७५ ॥

**तुम्बरुः**—पुलिनप्रथितनितम्बाःकमलायतचारुलोचना विमलाः ।
गङ्गाद्या इव नद्यो रम्याकृतयस्त्विमाः कतमाः ॥७६॥

**नारदः**—अभेदमबुध्वा दृष्टान्तदार्ष्टान्तिकभावोऽयम् ।

तथाहि, एता हि वपुषोपेताः सेवायै सकलेशितुः ।
गङ्गाद्या एव सरितः स्फुरन्ति परितः स्वयम् ॥ ७७ ॥

**संकल्पः**—देवि, भागीरथीप्रभृतयः सरितः समस्ताः
श्रीकृष्णसेवनसुखेष्वनुषक्तचित्ताः ।
स्वैः स्वैर्जलैर्जगदीशतुरस्य शौरेः
स्नानाय सत्वरमिमाः समये समेताः ॥७८॥

**नन्दः**—(प्रविश्य) मातः

आज्ञा त्वदीया सुखसिन्धुमूर्ते-
रमुष्य सेवा किमतोऽधिकं नः ।
(सिद्धीरुद्वीक्ष्य) अभ्यञ्जनादस्य निरञ्जनस्य
परन्तु नेच्छन्ति विरन्तुमेताः ॥ ७९ ॥

स्नपनसामग्री तु सर्वा सिद्धैव ।

**कामधेनुः**—अधुना विलम्बो न विद्यते, यतः

तैलैरभ्यज्य गोविन्दं सिद्धयो ऽतिसुगन्धिभिः ।
अत्यन्तमृदुभिश्चूर्णैः कुर्वन्त्युद्वर्त्तनं हरेः ॥ ८० ॥

**तुम्बरुः**—(नारदं प्रति) दृश्यतां सिद्धयः ।

प्रत्यङ्गमभ्यङ्गविधिं विधाय
सेवासु सद्यो गलिताधिकाराः ।
अम्लानपङ्केरुहतुल्यवक्त्रा-
स्तिष्ठन्ति शौरेः परितोऽविदूरे ॥ ८१ ॥

**नारदः**—एवमेव वर्तते ।

परमात्मप्रियाभ्योऽस्य परिचर्यैव रोचते ।
तदभावे क्षणोऽप्येकस्तेषां युगशतायते ॥ ८२ ॥

**तुम्बरुः**—पुनर्विपर्ययो दृश्यताम् ।

मुरारिवक्त्रं किल पुष्कलेन्दु-
र्दृगस्य शुद्धामृतरश्मिरेव ।
आसां मुखानि स्फुटकैरवाणि
प्रमोदमेवाभिवहन्त्यनेन ॥ ८३ ॥

**नारदः**—परमकृपालुः खल्वयम्, तथाहि,

कृपामृदुलता परिस्फुरति कापि गोपीपते-
स्तनोति सुखमेव यन्निजजनेषु सर्वात्मना ।

स्मितेन विशदेन वा विपुलवेणुनादेन वा
विचित्रशिशुलीलया ललितशीलया वा दृशा ॥ ८४ ॥

**तुम्बुरुः**—( दुन्दुभिमुखवाद्यनिनादं श्रुत्वा ) अत्राप्यस्य भगवतोऽभिषेको दृश्यताम् ।

रूपेणातिविशोभिताः शुभतरक्षौमाम्बरस्फूर्जिता
नानाभूषणभूषिता यदुपतेः सेवासु चोत्कण्ठिताः ।
गङ्गाद्याः सरितः समेत्य सलिलैः स्वैः स्वैर्महानिर्मलैः
सौवर्णैः कलशैरमुष्य दधति प्रीत्याऽभिषेकोत्सवम् ॥८५॥

किंच, नानास्वर्णकटाहपूर्णसलिलैरन्त्यतसन्तापितैः
शीताम्भःशबलैः सबाष्पलतिकाजालैरतीवोज्ज्वलैः ।
ता एताः कनकाभिजातकलशैः कृष्णाभिषेकोत्सवं
रत्नालंकृतपाणिकङ्कणरणत्कारैः समातन्वते ॥ ८६ ॥

अपिच, पाथोभिः परिपूरयन्ति कलशानेकाः पराः पूरितान्
पाणिष्वाकलयन्ति मूर्ध्नि च हरेस्तान् रेचयन्तीतराः ।
रिक्तांस्तानथ पूरयन्ति च परा इत्थं तदाराधने
पौनःपुन्यदशाऽतिसंभ्रमवशादासां भृशं भासते ॥ ८७ ॥

**नारदः**—सत्यमेतत् । किंतु,

एतासामतिपीतिमा करतलेष्वासां च यो रक्तिमा
हस्तन्यस्तसरत्नहेमकलशेऽष्वास्ते च यश्चित्रिमा ।
तेभ्यो निःसरदम्भसां प्रविलसन् धारासु यः शुक्लिमा
तानेतांस्त्वकृतार्थतां प्रणयति श्रीमानयं नीलिमा ॥८८॥

**तुम्बुरुः**—एवमेव देवर्षे ।

स्वभावविमलं वस्तु स्वस्मादुत्तमवस्तुनि ।
विनियुक्तं विशोभेत रमेव परमेश्वरे ॥ ८९ ॥

**संकल्पः**—( पूर्वतोऽवलोक्य ) देवि कथमस्मिन् दिव्योत्सवेऽविनियुक्तैव मानुषी संचरति ।

तथाहि, कर्णावतंसीकृतपुष्पगुच्छा
मयूरपिच्छाङ्कितकेशपाशा ।
सेयं समागच्छति कापि गोपी
परंतु, लावण्यमेतन्न कदापि दृष्टम् ॥ ९० ॥

**कामधेनुः**—गोपाङ्गना चेत्कथमद्भुतश्री-
दिव्याङ्गना चेत्कथमेष वेषः ।
अस्येव चास्या अपि दुर्विभाव्यं
विभाति भव्यं किमपीह रूपम् ॥ ९१ ॥

( अन्तर्दृष्ट्यावलोक्य संकल्पं प्रति ) अङ्ग,
वैकुण्ठभूपाल इति प्रसिद्धः
स एष गोपालकुलं प्रविष्टः ।
तं सेवितुं संप्रति संविधत्ते
गोपीविलासान्कमलासनेयम् ॥ ९२ ॥

प्रसिद्धं ह्येतत्, देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी ।
विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम् ॥ ९३ ॥

**नारदः**—तुम्बरो 'रमेव परमेश्वरे' इतिभवदुपक्षिप्तमेव संवृत्तं पश्य,
अभिषेकोत्सवप्रान्ते कान्तेयं मधुविद्विषः ।
नमस्कृत्य, ददाति परिधानीयं सुन्दरं पीतमम्बरम् ॥ ९४ ॥

अयमपि, आदत्ते कमलाहस्तात परिधत्ते च तत्स्वयम् ।
धत्ते स तडिदम्भोदविडम्बितं मुदान्वितम् ॥ ९५ ॥

**तुम्बरुः**—भूषणैश्चन्दनालेपैः प्रसूनैरपि गोपतिम् ।
अष्टौ परिचरन्त्येनं पद्मायाः परिचारिकाः ॥ ९६ ॥

**नारदः**—एता अणिमाद्या महासिद्धयः ।

**तुम्बरुः**—दिव्या सभा सपदि भाति समस्तरत्न-
श्रेणीभिरत्र विमलद्युतिभिर्मनोज्ञा ।

तत्र, सिंहासनं कनकरत्नविनिर्मितं च
सद्यः कृतार्थयति सोऽयमिदं मुकुन्दः ॥ ९७ ॥

किंच, रत्नस्फुरद्विमलदण्डसमन्वितेन
हस्ते धृतेन सितभास्वरचामरेण ।
पार्श्वस्थितैव कमला कमलायताक्षं
संसेवते वितनुते च मुदं मुरारेः ॥ ९८ ॥

( तावत्कामधेनुः कृष्णसमीपमेत्य सर्वतः परिश्रितं दृष्ट्वा )

**कामधेनुः**—भगवन्,
दुग्धं दुग्धपयोनिधेर्घृतपयोराशेर्घृतं चाहृतं
किंचैतन्मम दुग्धमस्ति घृतमप्येतन्मदीयं विभो ।
विस्तीर्णेक्षुरसाम्बुराशिलहरी संसङ्गिनीत्वस्य या
साकं शर्करया महामधुरया गोपीश तत्पीयताम् ॥९९॥

**श्रीकृष्णः**—( सस्मितम् )
प्रसिद्धमेतद्यत्स्निग्धदुग्धं सघृतशर्करम् ।
पाययन्ति कृताभ्यङ्गान् बालकान्मातरः स्वयम् ॥१००॥
( ततः प्रथमतो दुग्धाम्बुधेर्दुग्धं निपीय )

मातः परिचितमेतत्तदस्माकं तत्र निवसताम् । ( अथापरं निपीय )
अहो अत्यपूर्वमेतत्, अथवा कामधेनुप्रसादे किमपूर्वम् ।

**कामधेनुः**—यदियं त्रिजगन्नाथपादयोः परिचारिका ।
निर्वर्णयसि सैषा तु भक्तवत्सलता तव ॥ १०१ ॥

( स्वादूदकेनाम्बुधिजलेनाचमनं प्रदाय, अतिमृदुलक्रमुकफलसकलनिचय-सहितं प्रविलसदेलाफललवङ्गकर्पूरादिपरिमलद्रव्ययुतं केतककुसुमवासनासमन्वितखदिरसारसमेतं सौवर्णवर्णताम्बूलवल्लीदलकदम्बकं भगवते प्रदाय )

सन्मुखामोदसंबन्धमेतद्गोविन्द विन्दतु ।
कथमन्यथा, वक्त्रामोदश्रियो मूलं ताम्बूलं जगतो भवेत् ॥ १०२ ॥

( तिरस्करणीरपसार्य ) कः कोऽत्र ।

**संकल्पः**—आज्ञा प्रदीयताम् ।

**कामधेनुः**—( सक्रोधम् ) कथमद्यापि विलम्बन्ते ब्रह्मादयः ।

**संकल्पः**—(सविनयम्) अन्तःसेवां दधत्याहि भवत्या जगदीशितुः ।
आयाता एव न ज्ञाता मातर्ब्रह्मादयः सुराः ॥१०३॥

( नेपथ्याभिमुखमवलोक्य ) सेयं सरस्वती दृश्यते,

सकलसुजनानां नेत्रपङ्क्तीर्हरन्ती
वपुषि परिवहन्ती वर्णमन्त्यतगौरम् ।
इह तरुरहितेव स्वर्णवल्ली मनोज्ञा
तडिदिव घनशून्या भारती भासते ऽसौ ॥ १०४ ॥

( प्रविश्य सरस्वती, प्रणम्य कामधेनुम् )

**सरस्वती**—श्रीगोविन्दपदारविन्दपरमप्रेमानुबन्धव्रताः
ब्रह्माद्याः समुपागता दिवि पदस्तिष्ठन्ति सोत्कण्ठताः ।
यद्याज्ञा भवति प्रभोर्भगवतः सान्निध्यमासाद्यते
सेवन्तां निजजन्मनः सफलतां कामं लभन्ताममी ॥१०५॥

**कामधेनुः**—( श्रीकृष्णं प्रति ) प्रणमति सरस्वती सेवनाय ।

**सरस्वती**—भगवन् ब्रह्मादयः सुराः श्रीमतो दर्शनमाकाङ्क्षन्ति ।

( ततो भगवतो भ्रूविलसितेनैव ब्रह्माद्याकारणानुज्ञामवाप्यापसृत्य करपल्लवेनाकारणाभिनयपूर्वकम् )

भो भो विरञ्चिप्रमुखा आयान्तु आयान्तु । इह हि,

सिंहासनेऽस्ति भगवान् रमया समेत-
स्तत्राधुनैव भवतामभवत्प्रसङ्गः ।

नाशङ्कनीय इह वेत्रभृतां प्रहारो
जानन्ति गोकुलपतेः खलु तेऽभ्यनुज्ञाम् ॥ १०६ ॥

( पुनःपरावृत्य ) श्रीभगवन् एष चतुराननो हंसादवतीर्य-
विसृज्य निजवाहनं स्वजनेषु पद्मासन-
श्चतुर्मुकुटमण्डितः प्रथितशुभ्रकूर्चान्वितः ।
भवन्मुखविलोकनप्रभवमोदपाथःप्लुतः
स्फुरन्नयनपङ्कजः पतति दण्डवद्भूतले ॥ १०७ ॥

**ब्रह्मा**—( प्रविश्य ) श्रीभगवन्,
अवाप्तसर्वकामस्य करवाम किमु प्रभो ।
तथापि सेवामेवात्र भवतः प्रार्थयामहे ॥ १०८ ॥

**सरस्वती**—एष भगवान् महेशः स्ववाहनादवतरति । यस्य खलु,
वह्निर्ललाटविषयेऽथ जटासु तोयं
सौधी कला च मुकुटे गरलं च कण्ठे ।
नित्यं विरोधिषु विरोधनिरासहेतुः
सेवार्थमञ्चति स संप्रति पार्वतीशः ॥ १०९ ॥

किंच, त्वं पूर्णकामस्तव चापि भक्ताः
संपूर्णकामा इति सुप्रसिद्धम् ।
तथापि, त्वत्पादपङ्केरुहसेवनैक-
सुखं तु भक्तेष्वधिकं विभाति ॥ ११० ॥

( तं दृष्ट्वा ) हरिरिति हर इति भवता भेदं गमिता स्वरूपचिन्मूर्त्तिः ।
स्वपदसरोरुहसेवनसुखमिव संभोक्तुकामेन ॥१११॥

**महेशः**—( प्रविश्य ) नैवावयोः स्वल्पतमोऽपि भेदः
तदेतदुद्बोधयतीह वेदः ।
तथापि लावण्यविशेष एव
विलोकनायैव तनोति काङ्क्षाम् ॥ ११२ ॥

**सरस्वती**—भगवन्नेत इन्द्राग्नियमवरुणादयः।

कृत्वा धरानिपतनैरभिवन्दनानि
स्थित्वाचरन्ति पुरतोऽञ्जलिबन्धनानि।
बध्वा भवच्चरणसंनिधिसौख्यसिन्धुं
स्वस्वाधिकारपदवीं तृणवद्विदन्ति॥ ११३॥

**इन्द्रादयः**—( प्रविश्य ) अस्तु स्वर्गसुखं देव कदापि न तदस्तु वा।
सर्वदा त्वत्पदाम्भोजरजःसंसर्गितास्तु नः॥११४॥

**सरस्वती**—( पुनः ) श्रीभगवन्

वेदा मुदा स्वीकृतमूर्तिभेदा-
स्तोतुं समायान्ति भवन्तमेते।
सौन्दर्यसन्दर्शनसाभिलाषाः
सर्वे च सिद्धाः सनकादयोऽमी॥ ११५॥

**वेदाः**—( प्रविश्य ) त्वद्भक्तिलभ्यसुखसिन्धुषु संदिहाना-
श्चित्तेषु नश्वरसुखान्यनुसंदधानाः।
देहेषु बुद्बुदसमेषु वृथाभिमानाः
कालं नयन्ति विफलं विगताभिमानाः॥ ११६॥

अपिच, अटन्तु तीर्थानि पठन्तु चास्मान्
कुर्वन्तु यागान् कलयन्तु योगान्।
तमालनीले त्वयि वा सलीले
रतिं विना नैव गतिं प्रतीमः॥ ११७॥

**सनकादयः**—( प्रविश्य ) न वेदविद्या न च यज्ञविद्या
न ब्रह्मविद्या न च मोक्षलक्ष्मीः।
सुखाय लोकस्य तथा यथाहि
त्वत्पादपङ्केरुहभक्तिरेका॥ ११८॥

**सरस्वती**—( उपसृत्य कामधेनुम् ) मातः पश्य,

यन्मूर्द्धि सर्षप इव प्रतिभाति पृथ्वी
सोऽयं समेत्य पदयोः प्रणिपत्य शौरेः ।
पश्चादुपेत्य हरिमूर्द्धनि रत्नचित्रं
धत्ते फणावलयमुज्ज्वलमातपत्रम् ॥ ११९ ॥

अपिच, ब्रह्माण्डखण्डमिह चञ्चुपुटेन धृत्वा
नीत्वा सुदूरमथ भेत्तुमिदं समर्थः ।
सोऽयं समेत्य गरुडः प्रणिपत्य धत्ते
बद्धाञ्जलिर्विनयमेव हरेः पुरस्तात् ॥ १२० ॥

**कामधेनुः**—सरस्वती सर्वोऽयं सुरसमाजः संवृत्तः । संमदवशात्तु नारदतुम्बरू गायन्तावन्तरितौ तावेतावग्रतः कर्तव्यौ, एतद्गीतप्रियोऽहि भगवान् ।

**सरस्वती**—तथा, ( इत्युपसृत्य तावाहूय ) मातस्तावेतौ ।

( प्रविश्योभौ प्रणम्य वीणां समंजसीकृत्यातिमधुरसमकण्ठम् )

श्रिया सेवितं सर्वदा गोपराजं
तनौ कोटिकन्दर्पलावण्यभाजम्
कृपासागरं चारुपङ्केरुहाक्षं
मनोवाञ्छितार्थप्रदं कल्पवृक्षम् ॥ १२१ ॥

जगद्बीजभूतस्फुरद्भ्रूविलासं
चिदानन्दसन्दोहशुद्धावभासं
घनश्यामलं कोमलाङ्गं भजामः
श्रुतिन्यायतः संसृतिं संत्यजामः ॥ १२२ ॥

**ब्रह्मादयः**—( मिथः नारदतुम्बरू उद्दिश्य )

गायन्तौ भगवन्तं सुखमयमन्तः सदैव नन्दन्तौ ।
तावेतावतिधन्यौ नैतत्सदृशौ जगत्यन्यौ ॥ १२३ ॥

अपि च, धन्यास्त एव पुरुषास्त्रिजगन्ति येषामनन्तगीतेन ।

गच्छति सकलः समयो न तु विषयोपस्थितिः कापि ॥१२४॥

**सरस्वती**—( आकाशे दृष्ट्वा )

स्फुरन्ति परितः कथं वियति हेमवल्लीचयाः
कथं च ननु काञ्चनीनलिनपङ्क्तिरप्यञ्चति ।
स्फुरन्मधुकरावलीविलसितानि संतन्वते
नभोवलयनीलतामपि च सर्वतः पुष्कलाम् ॥१२५॥

( सादरमवलोक्य ) अहो विदितम् ।

ताः एताः सुरसुन्दर्यः सैषा च वदनावली ।
दृग्विलासास्तु परितस्तासामेव स्फुरन्त्यमी ॥ १२६ ॥

( कामधेनुं प्रति ) अये, उर्वशीप्रमुखा एता भगवत्परिचर्यायै नभसोऽवतरन्ति । पश्य,

एता अप्सरसः समेत्य तरसा कृष्णे लभल्लालसा
दूरादेव विनिर्मितप्रणतयो नृत्यं समातन्वते ।
मूर्छन्मन्मथतः क्षणं प्रथमतः प्रस्विन्नवक्त्राम्बुजा-
स्वेतास्वप्रतिभेव किं तु कमलाकान्तावलोकादभूत ॥ १२७ ॥

**कामधेनुः**—सरस्वति स्वरसत एव दुस्तरा कथमप्रतिभा निस्तीर्णा ।

यतः,

मनस्विनोऽप्यप्रतिभा सभायां
कुतोऽपि हेतोरुदयं समेता ।
सर्वानवद्यामपि शास्त्रविद्यां
सद्यो विलीनामिव संतनोति ॥ १२८ ॥

**सरस्वती**—कथं न जानाति भगवती, किंतु मदुक्तिं कामयसे । तदेतत्प्रब्रवीमि ।

लावण्यैकनिकेतनं भगवतो रूपं विलोक्यैव ता
मूर्छन्मन्मथतः च्युतप्रतिभताहेतोः क्षणं लज्जिताः ।

अनन्तरं श्रीमन्नारदमहामुनिसंगत्या समवगतभागवतनाममाहात्म्या झटित्येव,

गोविन्देतिपदं ततो हृदि समावर्त्यैव नृत्यं दधु-

स्तन्नामस्मरणे हि कामकलुषं नैवाभिभूत्यै भवेत् ॥१२९॥

**कामधेनुः**—एवमेव, भगवन्नामनिष्ठानां न कामस्यापि संभवः।

पीयूषमेव पिबतां नैव व्याधेरुपद्रवः ॥ १३० ॥

**सरस्वती**—मातर्धन्या एता यतः सर्वात्मना भगवदाराधनार्थमेव यतन्ते। तथाहि,

नृत्यानुषक्तवपुषा परितोषयन्ति

गायन्ति किंच वचसा मधुरस्वरेण।

नाम स्मरन्ति मनसा शिरसा नमन्ति

पश्यन्ति पुष्कलदृशा च मनोऽभिरामम् ॥ १३१ ॥

**कामधेनुः**—एवमेव।

**सरस्वती**—मातः,

वीणानां ध्वनिरुत्तमः श्रुतिसुखं गीतं सुरर्षेरिदं

नृत्यं पेशलमुर्वशीप्रभृतिकस्वर्गाङ्गनानिर्मितम्।

देवानां च समाज एष सुमहान् सर्वाश्च संसिद्धयः

प्रत्यक्षास्तदिहोत्सवे विजयते किं किन्न लोकोत्तरम् ॥१३२॥

**कामधेनुः**—सत्यं, भवति लोकोत्तरम्। परंतु,

गीतेन किं बत सरस्वति मञ्जुनापि

नृत्येन वा मधुरवाद्यरवेण वा किम्।

सद्यः समस्तजनखेदविनाशनं तु

संकीर्तनं न यदि तत्र पवित्रकीर्तेः ॥ १३३ ॥

अपि च, मिलन्तु सकला देवा विस्फुरन्तु च सिद्धयः।

परं तु परमानन्दो गोविन्देनैव केवलम् ॥ १३४ ॥

तस्मादस्मन्मनोऽनुरञ्जनमनेनैव। पश्य,

अस्मन्मनोनयनरञ्जनहेतुभूतं

कृष्णस्य किं किमतिकारुणिकस्य वर्ण्यम् ।
यः केवलं सुमुरलीरवलीलयैव
विश्वानि रञ्जयति कञ्जविशालनेत्रः ॥ १३५ ॥

**सरस्वती**—संसेवनमप्यस्य मनोऽनुरञ्जनम् । तथाहि,

निर्दुष्टमस्तु चरितं विपुला च विद्या
हृद्यं यशोऽस्तु भृशमस्तु च कर्मनिष्ठा ।
एतानि किंतु विकलानि भवन्ति तेषां
संसेवनं भवति कंसरिपोर्न येषाम् ॥ १३६ ॥

अपि च, अस्य भगवतः संसेवने मुक्तिरप्यनायासेन तदुक्तमनेनैव कविना ग्रन्थान्तर,

या दानिनां च दमिनां च तपस्विनां च
सन्यासिनां च सततं हृदि काङ्क्षितैव ।
श्रीकान्तसेवनसुखेन समुद्धतानां
दासीभवत्यहह सा सहसा विमुक्तिः ॥ १३७ ॥

तस्मादधुना, स्वं लोकं नैव यास्यामः स्थास्यामः किं तु गोकुले ।
समयं स्वं च नेष्यामो घनश्यामोपसर्पणे ॥ १३८ ॥

**कामधेनुः**—सरस्वति सम्यगुक्तमिदं भवेद् ब्रह्मादीनां मनसि, अस्माकं च, किं तु गोकुलनिवासिभ्यो नास्ति निस्तारः । पश्य,

गोपालबालसहखेलरतिः सुराणां
सेवां न वाञ्छति घनद्युतिरेष देवः ।
गोपाङ्गनाप्रियनमस्यसुराङ्गनानां
लास्येऽपि चास्य परितुष्यति नान्तरात्मा ॥ १३९ ॥

**सरस्वती**—( नेपथ्याभिमुखमवलोक्य ) मातः कोऽयं विलक्षणः समायाति ।

**कामधेनुः**—(विलोक्य) अये, अस्मदुक्तमेकं संवृत्तम्, सोऽयं गोकुलनिवासिनां दूत एनं नेतुमायातीति लक्ष्यते ।

**दूतः**—(प्रविश्य प्रणम्य भगवन्तम्)

अधुना भगवन्नन्दः कृतसर्वाह्निकक्रियः ।
प्रतीक्षमाणस्त्वामास्ते देव्या सह यशोदया ॥ १४० ॥

(तदाकर्ण्य श्रीभगवान् सर्वान् प्रति)

**श्रीभगवान्**—देवाः सेवा समापन्ना संपन्ना नः सुखोन्नतिः ।
स्वस्वाधिकारकार्याणि संप्रधार्याण्यतःपरम् ॥ १४१ ॥

(सर्वे ब्रह्मादयः शिरसाधिप्रणम्य गलदश्रु सगद्गदकण्ठम्)

**ब्रह्मादयः**—आज्ञा तवैषा न विलङ्घनीया
न शक्नुमः स्थातुमतः कथञ्चित् ।
त्वत्पादसांनिध्यसुखप्रसक्ताः
शक्ताश्च न स्वानि पदानि गन्तुम् ॥ १४२ ॥

**श्रीभगवान्**—(तदवस्थामवेत्य) देवाः न कर्तव्येयं कातरता ।
अस्मत्संबन्धिसांनिध्यमस्ति सर्वत्र सर्वदा ।
अस्मासु प्रेमयुक्तेषु युष्मासु तु विशेषतः ॥ १४३ ॥

**ब्रह्मादयः**—अस्ति सर्वत्र सान्निध्यं सदा सर्वगतस्य ते ।
भक्तेषु प्रेमयुक्तेषु तदस्मासु विशेषतः ॥ १४४ ॥

तदेतद् ज्ञायत एवातश्च नास्माकं कापि कातरता, किंतु भगवतैव परस्परविरुद्धं क्रियते । तथाहि,

दराासि वचसानुज्ञां स्वर्लोकगमनाय नः ।
अस्मानेव च बध्नासि लावण्यप्रमुखैर्गुणैः ॥ १४५ ॥

**कामधेनुः**—(तावच्छक्रप्रणोदिता) श्रीभगवान् एष विबुधाधिराजः स्वापराधाननुसंदधानः प्रस्थानेऽवस्थाने च शङ्कमानः करुणया संभाव्यताम् ।

**श्रीभगवान्**—इन्द्रस्य नापराधोऽयमुपकारः स केवलम् ।
अन्यथा कथमेतावानुत्सवः संप्रवर्तताम् ॥ १४६ ॥

अपिच, जगतामुपकाराय शक्रस्यैतद्विचेष्टितम्
इमं साद्यन्तवृत्तान्तं कः श्रुत्वा न सुखीभवेत ॥ १४७ ॥

( शक्रं प्रति ) ब्रह्मादयः प्रतीक्षन्ते शक्र शैघ्रयेण गम्यताम् ।
स्वाराज्यं भुज्यतां तत्र दया दीनेषु तन्यताम् ॥ १४८ ॥

एतदेवास्मदनुग्रहपात्रत्वबीजम् ।

**शक्रः**—शिरस्याज्ञा ।

( इति शक्रेण प्रस्थिते, कामधेनुः पृष्ठतः स्थित्वाञ्जलिं च बध्वा सगद्गद-विगलदश्रुधारम् )

**कामधेनुः**—श्रीभगवन्,
यदुवर भवदाज्ञालङ्घने कः समर्थ-
स्तदमरनिचयोऽयं प्रस्थितः सर्व एव ।
इह तव पदसेवामेव देवेश कुर्यां
सततमिति तु चेतःकाङ्क्षितं पूर्यतां मे ॥ १४९ ॥

( इति चरणयोः प्रणताया मस्तके हस्तकमलं दत्त्वा )

**भगवान्**—देवि न चिन्तां कुरु ।
शृणु वचनमिदं मे गम्यतां कामधेनो
सकलसुरसमाजोऽप्यन्यथात्रैव तिष्ठेत् ।

किं त्वद्यप्रभृति,
तव हृदयसरोजे गोव्रजे वा समा मे
स्थितिरिति कुरु सेवां स्वस्थलावस्थितैव ॥ १५० ॥

त्वामप्येते प्रतीक्षन्ते सशक्रा ब्रह्मादयः ।

( ततः सवृन्दारकैः सरस्वतीप्रमुखैः स्त्रीजनैः सह प्रस्थितायां कामधेनौ )

**लक्ष्मीः**—( भगवन्तम् ) स्थास्यामि काममिह गूढतया स्फुटं वा
यास्यामि नैव तु भवन्तमृते कदापि ।

स्त्रीणां हि भर्तृगृहं पितृगृहं वा, तदहं त्वां विना

वैकुण्ठधाम तव वा पितुरम्बुराशे-
वेंश्मापि वा न मम विश्रममातनोति ॥ १५१ ॥

( स्वगतम् ) तदहमन्यतो गन्तुमेव न शक्नोमि, अयं तु अन्यत्रासक्तचित्तोऽतो मम गूढतयैवावस्थानमुचितम् ।

( रासक्रीडामभिप्रेत्य ) आगामिनीषु रजनीषु शशिप्रभासु
गोपीषु गोकुलसमीपवनस्थलीषु ।
भृङ्गीषु वेणुकलगीतिषु तावकीषु
स्थित्वा भवन्निकटवृत्तिसुखानि भोदये ॥ १५२ ॥

**श्रीभगवान्**—(विदिताशयः सन् सस्मितम्) किमित्येवं विप्रकर्षं ब्रूषे ।
गूढा वस ममैव त्वमन्तर्हृदयवेश्मनि ।
अथवा तिष्ठ विस्पष्टमुपर्येव ममोरसि ॥ १५३ ॥

अपिच, कालत्रयेऽपि कमले त्वमेव दयिता मम ।
इतरत्र रताद्यत्वं निर्वाहायैव केवलम् ॥ १५४ ॥

( अस्य वक्षस्थलप्रिया भगवतो विकल्पोक्तिमसहमाना )

**लक्ष्मीः**—गोपालान् प्रति गूढत्वमस्तु वक्षस्थलेऽपि मे ।
न त्वां प्रति मदुक्तं हि तत्सर्वज्ञशिरोमणे ॥ १५५ ॥

( पुरतः प्रचलिता ब्रह्मादयः परस्परम् ) अतः परं हरेः संकीर्तनेन श्रवणेन वा सान्निध्यसुखं लब्धव्यम् । यतः,

अनन्तकविनिर्मितं विविधपद्यबन्धान्वित
मनोहरकथायुतं सकलदोषदूरीकृतम् ।
यदास्य गुणवर्णनं वचसि कर्णयोर्वा नृणां
तदा सपदि सन्निधावयमुपैति लक्ष्मीपतिः ॥ १५६ ॥

(इति प्रणम्य निष्क्रान्ताः सर्वे, श्रीकृष्णोऽपि यथादूतागतं लक्ष्मीवल्लभो निष्क्रान्तः)

**इति श्रीमदापदेवसूनुनानन्तदेवेन विरचिते मनोऽनुरञ्जनाभिधाने**
**हरिभक्तिनाटके चतुर्थोऽङ्कः समाप्तः ।**



# अथ पञ्चमोऽङ्कः ।

( ततः प्रविश्य गोपकुमारिकाः परस्परम् )

**सख्यः**—अनिकमनीय एष यमुनापुलिनप्रदेशः । यदत्रैव पूजासाधनानि स्वस्वपरिधानानि च निधाय स्नास्यामः । तदनु गौरीचरणकमलपरिचरणमप्यत्रैव विधास्यामः ।

( तावत्कमलदलविलोचनः श्रीदामसमेतस्ताभिरनभिलक्षित एव दूरतः प्रविश्य )

**श्रीकृष्णः**—श्रीदामन् पश्य पश्य, किमेताः संचरन्ति ।

**श्रीदामा**—( तिर्यक्ग्रीवमवलोक्य ) देव परस्पराभिमुखा यमुनासलिलमवगाहन्ते ।

( शनैः शनैः धरणितलविनिहितचरणकमलप्रचारमनभिव्यक्तकनककिङ्किणीप्रमुखभूषणरणत्कारं वञ्चितकुमारिकानयनदृष्टिसंचारं च समेत्य तत्कालमेवासां परिधानवासांस्यपहृत्य ससखिर्निकटवर्तितरुवरशाखामवरुह्य )

**श्रीकृष्णः**—श्रीदामन् पश्य, कालिन्दीजलविस्फुरदिन्दीवरदलपरिमलपरिग्रहपर्याकुलमधुकरकुलविरचितमधुरस्वरेण समं स्वकीयकोमलकण्ठरवेण समुच्चलदुत्तुङ्गतरङ्गेष्वपि निश्चलतरुजलचरविहङ्गेषु सभाजनेष्विव शृण्वत्सु सकलगोकुलकन्यकाः शीतलेष्वपि जलेष्वनुद्विग्ना एवाकण्ठमग्ना तद्गुणगीतमेव गायन्ति ।

**श्रीदामा**—किमाश्चर्यमनुद्विग्ना एव गायन्तीति ।

विहिते तव गुणगीते किं परलोके न तद्विजानीमः ।<br>
अनुभवसिद्धमिदं नः सपदि विषादं विदूरयति ॥ १ ॥

**श्रीकृष्णः**—श्रीदामन् पश्य,

आपाततः समतयैव समुल्लसन्ति
पङ्केरुहाणि सुदृशां च विलोचनानि।
आकर्णविस्तृतिविशेषवशादतीव
शोभा परं तु समुदञ्चति लोचनेषु ॥ २ ॥

अपिच, सामान्यमेव समवैति सरोरुहेषु
रोलम्बराजिरपसर्पति यत्ततोऽसौ।
जानाति किं तु वदनेषु विशेषमासां
तत्रैव वाञ्छति यतः करवारितापि ॥ ३ ॥

**श्रीदामा**—आकण्ठमग्नललनावदनावलीय-
माभाति पश्य यमुनाजलसङ्गमेन।
श्रीकृष्ण तावकशरीरसमाश्रयेण
त्वद्भूषणावलिरियं ललितैव हैमी ॥ ४ ॥

( गीतेरुच्चस्वरं समाकलयन्तीनां सलिलादुद्गतस्तनमण्डलीमालोक्य )
एतासां,

हृदयकमलपङ्क्तिर्लब्धुकामा भवन्तं
बहिरिह कुचकाशच्छद्मना निर्गतैषा।
तव तु गतिमलभ्यामेव विज्ञाय शौरे
वहति वदननैल्यं खेदखिन्नेव मन्ये ॥ ५ ॥

(तावद्गोपकुमारिकाः गीतावसाने स्वस्ववसनस्थानेषु वसनान्यनवलोक्य क्षुभिताः)

**गोपकुमारिकाः**—कः कोऽत्र विद्यते नष्टः। य इत्थमरुणोदयवेलायां वसनान्यपहरति। रे रे दुष्ट न जानासि किं गोकुलवासिलोकपरिपालनैकसमुद्योगं श्रीकृष्णम्। ( पुनः स्वमध्ये ) भो भो सख्यः यात यात। श्रीकृष्णं प्रति निवेदयत। स चाधुनैव समेत्य दुष्टस्यास्य तस्करस्य सद्यः शिक्षां दत्त्वास्मदीयवसनान्यानीय दास्यति।

**श्रीकृष्णः**—( श्रुत्वा ) भोः सरसिजनयनाः भवदीयमिमं वृत्तान्तं ज्ञात्वायमहमागतोऽस्मि । वदन्तु कुत्र तस्करः, यस्य शिक्षां दत्त्वा वसनान्यानेष्ये ।

**गोपकुमारिकाः**—( परस्परम् ) कोऽत्र, कृष्ण एव ब्रूते । वचनध्वनिस्तु ऊर्ध्वायां दिश्युपलभ्यते । ( इत्युदाननाः पादपोपरि तमेव त्रिभुवनकमनीयं समवलोक्य सहसा जातसाध्वसाः प्रमुदितमानसाश्च विस्मृत्यवसनवार्ताः ) सख्यः सोऽयमस्मत्कृतगौरीसमाराधनफलभूतः संप्रति संनिकृष्यते । तत्रापरःकः, अस्मद्वसनापहर्ताप्ययमेव भवेत् । प्रसिद्धं ह्येतस्य दध्यादिचौर्यम् ।

**इतराः सख्यः**—कथमेतस्य दोष एव गृह्यते न तु गुणः । तथाहि,

चौर्यं करोति सहसैव गृहेषु येषां
येषां सकृत्सकृदसौ सरसीरुहाक्षः ।
ते ते भृशं स्वगृह एव सुराधिराज-
सौख्यानि संप्रति समाकलयन्ति सर्वे ॥ ६ ॥

**अन्याः**—तिष्ठन्त्वन्या वार्त्ताः, पश्यन्तु तावत्किमयं करोतीति ।

**श्रीकृष्णः**—किमिति विलम्बः क्रियते कथ्यतां चौरः ।

**कुमारिकाः**—यः खलु

न कथंचिदपि ज्ञेयः स कथं कथ्यते गिरा ।
चौरस्तस्माद्भवानेव ( इत्यर्धोक्तौ )

**श्रीकृष्णः**—किमेता मामेव वाङ्मनसागोचरं चौरं निर्दिशन्ति । शृणोमि तावत् किमग्रे वदन्तीति ।

**कुमारिकाः**—तमन्वेषयतु द्रुतम् ॥ ६ ॥

**श्रीकृष्णः**—एषोऽयमन्विष्यते ।

( श्रीदामानं प्रति नयनकमलप्रान्तेन प्रतारणां सूचयन् )

श्रीदामन् गच्छ गच्छ शीघ्रं चोरमन्वेषय कुतो गत इति ।

दामा—तथा । ( इत्यपगते तस्मिन् कुमारिकाः प्रति )

श्रीकृष्णः—भो भोः सरसिजनयना एकं तावच्छ्रोतव्यं यदेतद्भवतीभिर्विवसनाभिरेव यमुनासलिलावगाहनमाचरितम्, तस्येदं कर्मणः फलं यद्वसनापगमो व्यसनाधिगमश्च

कुमारिकाः—( सचकितम् ) किं व्यसनम् ?

श्रीकृष्णः—इदमेव तत्, यद्गौरीसमाराधनवैकल्यं ततश्च फलाप्रतिलम्भः ।

कुमारिकाः—(सखेदं परस्परम्) मासमात्रमस्माभिरेवमेवाचरितम्, किमतः परं विधेयम् । ( किञ्चित्संप्रधार्य श्रीकृष्णं प्रति )
भगवन् भवन्तमेव शरणमागच्छामो गौरीसमाराधनवैगुण्यसमाधानं च पृच्छामः ।

श्रीकृष्णः—अस्मच्छरणागमनमपि भो यदि यथाविधि क्रियते तर्हि त्रितयमपि संपद्यते । वसनाधिगमः कर्मणो वैगुण्यसमाधानं समभिलषितप्रतिलम्भश्च ।

कुमारिकाः—कोऽसौ विधिरुच्यताम्, कुत एवेति ज्ञायताम् ।

श्रीकृष्णः—यतो भवतीभिर्गौरीसमाराधनवदस्मच्छरणागमनमपि विगुणमेव कर्तव्यम् ।

कुमारिकाः—( किंचिद्विचार्य ) नैतद् वक्तव्यं त्वया ।

श्रीकृष्णः—पित्रोःशपथःक्रियते परमप्रेमास्पदभवतीनामपि । अत उक्तेः प्रयोजनं विद्यत एव ।

कुमारिकाः—( परस्परम् ) अवश्यं कर्तव्यो विधिः, अन्यथा मासमात्रक्लेशाचरणं वृथैव स्यात् । ( कृष्णं प्रति ) उच्यतां विधिः ।

श्रीकृष्णः—श्रोतव्यम्, मस्तके हस्तकमलयुगलाञ्जलिबन्धनैरुप-समेत्यास्मदीयपदाम्भोजप्रणतिः संविधीयताम्।

कुमारिकाः—(परस्परम्) कथमेतद्वसनमस्माभिरनुष्ठातुं शक्यते।

काचित्कुमारिका—यद्येतद्वचनमकृत्वा स्थीयते, पूर्वोक्तं त्रितयमपि न निष्पद्यते, अग्रे च महती लज्जा। यद्वसनानि हारयित्वा यमुना-सलिले कुमारिका नग्नास्तिष्ठन्तीति सर्वे जनाः श्रोष्यन्ति। गोपकुमाराश्च द्रष्टुमागमिष्यन्ति तस्माल्लज्जां विहाय तदुक्तमेव कर्तव्यम्। त्यजेदेकं कुलस्यार्थे इतिन्यायात्।

श्रीकृष्णः—कथमहो कृत्वापि शपथं पुनर्विचारः क्रियते कुमा-रिकाः।

कुमारिकाः—को वा विचारः, परन्तु पादपोपरिस्थितस्य कथं पादपङ्केरुहप्रणतिः शक्यते कर्त्तुम्।

श्रीकृष्णः—एषोऽवतरामि। (इत्यवतीर्णे तस्मिन्, कुमारिकाः तदु-पदिष्टविधिना यावत्सलिलादुत्तीर्णास्तावत्कुचकलशाच्छादनं यथा भवति तथा कृतवतो निपतितानि स्वस्ववसनानि सपदि परिधाय)

कुमारिकाः—(स्वगतम्)

संदृश्यते क्षितिरुहोपरि नैव कोऽपि
यः संत्यजेद्वसनवृन्दमिदं यथास्वम्।
तस्मात्, संतोषरूपमुपसर्पणमस्य शौरेः
संपादयेत्सपदि वाञ्छितमन्तरिक्षात्॥ ७॥

(पुनरपि स्वगतम्) निन्दत्वसौ सकलगोकुलवासिलोको
दोषं पितृप्रमुखबन्धुजनोऽप्युदीरताम्।
सद्यःश्रमापहरणं मुरवैरिणोऽस्य
संसेवनं सुखकरं न परित्यजामः॥ ८॥

( ततः सानन्दं शिरस्स्वञ्जलिबन्धं विधाय गोविन्दचरणयोः प्रणतासु तासु, चोरान्वेषणाय प्रेषितः सुदामा प्रविश्य )

सुदामा—( स्वगतम् ) अहो समाप्तं कौतुकम, यदेताः परिहित-स्वस्ववसनाः श्रीपतिसमीपेऽवतिष्ठन्ते । कथं च लज्जयावनतवदनकम-लैरलङ्काङ्क्षितपुलकितकपोलफलकैः सकटाक्षैरेव पुण्डरीकाक्षमवलोकयन्ति । न तु परिपूजयन्ति गौरीचरणकमलम् ।

( पुनर्विमृश्य ) आः कथं पूजयन्तु । यतः

आनन्दसिन्धौ व्रजवासिबन्धौ
सान्निध्यमासाद्य यदूद्वहस्य ।
कुत्रास्महे वा किमु कुर्महे वा
नैतद्विजानन्ति विलोलनेत्राः ॥ ९ ॥

अपिच, नवयुवतिसमाजः कृष्णलावण्यसंज्ञं
नयनकमलपत्रैः सीधु पीत्वा मनोज्ञम् ॥
कुचकलशवियुक्तं मुक्तनीविप्रबन्धं
वसनमपि न वेद स्वस्वमन्यत्कुतोऽनु ॥ १० ॥

( श्रीकृष्णं प्रति प्रकाशम् ) श्रीकृष्ण

अन्विष्ट एव बहुधा पृष्टश्च कतिधा जने ।
अव्यक्तगतिरेवायं कुमार्यम्बरतस्करः ॥ ११ ॥

श्रीकृष्णः—( स्वरूपवर्णनं श्रुत्वा सस्मितम् ) श्रीदामन् आसां स्व-स्ववासास्यधिगतानि किमधुना तस्करेण । तद्गोकुलं प्रति गच्छावः ।

( इति प्रचलिते ऽस्मिन् )

कुमारिकाः—( स्वगतम् ) कथमस्मानद्याप्युपेक्षते । ( प्रकाशम् ) श्रीकृष्ण

नन्दराजकुमारस्य परिपालयतः सदा ।
अनन्विष्यैव किं चोरमुचितं गमनं तव ॥ १२ ॥

( इति सकम्पकरपङ्केरुहेणाञ्चले परिगृहीतः )

**श्रीकृष्णः**—किमर्थं मम सम्बन्धी धार्यते वसनाञ्चलः ।
मुच्यतां मुच्यतां तञ्च चौरमन्वेषयामि वः ॥ १३ ॥

**कुमारिकाः**—क्षणं गोकुलं प्रतिगच्छसि, क्षणं च तस्करमन्वेषयसि तदेवमपि विश्वसनीयस्त्वम्, कथं मोचनीयः । ( श्रीदामानं प्रति )

ललितैरतिकूटभाषितै-
अपलैश्चापि कटाक्षवीक्षितैः ।
सहसा कथमेष माधवो
युवतीभिर्वशमेव नीयते ॥ १४ ॥

यतः; हरिरपि वदनेषु लोचनेषु
स्तनकलशेषु च लोलया दृशा वा ।
स्फुटमभिरतिमाशु भासयन्स्ताः
हरति मनांसि मुहुर्विलासिनीनाम ॥ १५ ॥

**श्रीकृष्णः**—सख्यः तत्वमुच्यते ।
अथ मुञ्चतु मुञ्चतु मदीयं वसनाञ्चलम ।
लोकस्तु यमुनायां हि स्नानार्थं प्रति गच्छति ॥ १६ ॥

( ततस्तासामुभयतो व्याकुलतामवलोक्य सदयं स्वगतम् )
किमेतासां विधेयम्, ( तत्संप्रधार्य )
सख्यो गेहं व्रजन्तु न भयं मनो विषादम् ।

**कुमारिकाः**—(स्वगतम्) अयमुपदेशचतुरः, कथं हालाहलं गिलाम, अमृतं च कुर्वन् कथं कर्णौ दशाति ।

**श्रीकृष्णः**—वेणुध्वनिर्निशि निशम्य मनोऽभिरम्यं
वृन्दावने समभियातु ममान्तिकं तु ।

**कुमारिकाः**—अस्मान् प्रतारयसि किं सरसीरुहाक्षः

श्रीकृष्णः—सख्यः स एष शपथः क्रियते स्वपित्रोः ॥ १७ ॥

( तच्छ्रुत्वा परितः समायातं जनं च समवलोक्य वसनाञ्चलं विमुच्य सोच्छ्वासम् )

कुमारिका:—श्रीकृष्ण गच्छतु भवान् कुशलोऽस्तु पन्थाः ।
( ततः प्रस्थिते श्रीकृष्णे )

अस्मल्ललाटलिखितं तु कुतोऽन्यथा स्यात् ।

श्रीकृष्णः—( स्वगतम् ) कथमद्याप्यविश्वास एतासाम्, तदाश्वासयामि । ( इति पुनः परावृत्य )

एतावन्ति दिनानि कञ्जनयनाः क्लेशेन संवर्धितो
युष्माभिर्यमुनातटे सुविपुलः पुण्याह्वयः पादपः ।
मत्सङ्केतवचःप्रफुल्लकुसुमैःसंपूजितः सांप्रतं
सोऽद्य श्वः फलितो भविष्यति कथं तत्रापि संदिह्यते ॥१८॥

( इत्याश्वास्य सख्या सह निष्क्रान्तः, ता अपि प्रसादविषादाभ्यां निष्क्रान्ताः )

( ततः सायं प्रविशति श्रीकृष्णः सुनन्दश्च )

सुनन्दः—श्रीकृष्ण कथमस्मिन्विषमविषमे काले वनभुवं प्रति प्रस्थीयते । पश्य,

वनं प्रति गतो जनः प्रविशति स्वकीयं गृहं
समस्तविहगावली समुपसर्पति स्वालयम् ।
व्रजन्त्यपि च गोधनं व्रजभुवं प्रति श्रीपते-
र्दिनान्तसमये कथं चलसि काननान्ते हरिः ॥ १९ ॥

अपिच मित्र, मित्रस्य कष्टः समयो विभाति
प्रयाति यात्राभ्युदयं शशाङ्कः ।
काले किलास्मिन् व्रजवल्लभस्य
नैवोचितं ते गमनं वनान्ते ॥ २० ॥

**श्रीकृष्णः**—( सस्मितम् ) सुनन्द अस्ति किञ्चिदभिलषितम् ।

**सुनन्दः**—( स्वगतम् ) कथं न निर्दिशति, विशेषतः प्रायो गोपाङ्गनाः समभिलषन्ति । यतः तासामस्य च सांप्रतं परस्परं प्रेमोपलभ्यते । तथाहि,

गोपालैः सह गोकुलं प्रति यदा गोविन्द एष व्रजात्
तदा पानीयानयनच्छलेन यमुनापर्यन्तमायान्त्यमूः ।
अन्योन्यस्य तु तत्र वक्त्रकमलव्यालोकने मानसो
भावो हास्यमिषेण सर्पति बहिर्बिम्बाधरेषु स्फुटम् ॥ २१

अन्यदपि, अन्योन्यकाममिलितानि विलोकितानि
तत्र स्मितानि रचयन्मुखसंगितानि ।
मार्गं समीपमपि वक्रगतानि किञ्च
प्रेमाणमेव गमयन्ति परस्परस्य ॥ २२ ॥

( पुनः स्वगतम् ) अथैतासां सोऽयं वृन्दावने गाः समन्वेषयति । तासामेवमस्यापि च प्रेम तासूपलभ्यते । तथाहि,

वेणुस्वरेण भृशमेष मनोहरेण
लोकोत्तरेण वपुषापि च सुन्दरेण ।
पीयूषतोऽप्यधिकबाष्पविशोभिदृष्ट्या
ता एव रञ्जयति मञ्जुलनामभिश्च ॥ २३ ॥

तथा, स एष यमुनातटेन वितनोति वेणुस्वनं
समाह्वयति मञ्जुलध्वनिभिरात्मधेनूर्वने ।
तथापि बहुदूरतस्त्वरितमेत्य गावो हरेः
स्फुरन्मुखनिरीक्षणे परिहरन्ति भूरिश्रमम् ॥ २४ ॥

तदयमेव प्रष्टव्यः किमभिलषसीति । अथवा किं प्रश्नेन फलत एव ज्ञातव्यम् । ( इत्यग्रे श्रीकृष्णेन समभिसृत्य चन्द्रोदयं दृष्ट्वा श्रीकृष्णं प्रति )

यस्या विरहकालेऽसौ विधुरासीद्धतप्रभः ।
यामिनीं तामथाभ्येति कामिनीमिव वल्लभः ॥ २५ ॥

अपिच, फुल्लत्वं गमितानि तिग्मरुचिना पद्मानि संमीलय-
नैवाथो मिलितानि तानि कुमुदान्युत्फुल्लतामानयन् ।
तत्संतप्तमनेन तद्धि रचयन् संशीलितं चन्द्रमा
मन्ये मत्सरमातनोति रविणा पूर्वं परे भाविनः ॥ २६ ॥

किञ्च, तालप्रमाणपरिशीलनकृन्मयूखै
रात्रिं तनोति दिनतोऽप्यधिकाभिरम्याम् ।
तेन स्ववल्लभसमागमनाय सद्यः
प्रोत्साहमेव जनयत्यपि मानिनीनाम् ॥ २७ ॥

**श्रीकृष्णः**—उल्लसत्कुमुदसंप्रकाशिनी
यामिनी स्फुरति चन्द्रमोगमे ।
सुप्रसन्नवदनावभासिनी
कामिनीव निजवल्लभागमे ॥ २८ ॥

किञ्च, शीतांशुकान्तकरसंगमतो विचित्रं
प्रौढाङ्गना मुदमतीव दधाति पश्य ।
यतः, सेयं स्फुरत्कमलकाशसुपुष्पहासा
भाति प्रसूनकलिकाकलशावभासा ॥ २९ ॥

**सुनन्दः**—श्रीकृष्ण
इह सुरतरुरेष पश्य पश्य
सकलवनद्रुममौलिरत्नभूतः ।
अभिनवकुसुमैर्विशोभमानः
स्फुरति हि दिव्यषडङ्घ्रिसेव्यमानः ॥३०॥

अपिच, स एष विबुधद्रुमो विविधदिव्यपत्त्रिस्वनैः
समाह्वयति कोमलैरमृतपेशलैस्त्वामिह ।
स यद्यपि च सर्वदा सकलवाञ्छितार्थप्रद-
स्तथापि नवसन्निधिं सुखनिधिं समाकाङ्क्षति ॥ ३१ ॥

**श्रीकृष्णः**—(सस्मितम्) समाह्वयति चेद् गन्तव्यमावाभ्याम्।

(इति सह सख्या कल्पतरुमूलेऽवस्थाय)

सुनन्द कथमधुना दिव्यपक्षिनिनादो न श्रूयते।

**सुनन्दः**—मत्वा संप्रति तत्तदिन्द्रियसुखे तुच्छत्वमात्यन्तिकं
धृत्वालोच्य सुसौख्य एव महतीं प्रीतिं विहङ्गावली।
नीलेन्दीवरसुन्दरं तव वपुः प्रद्योतिपीताम्बरं
चेतोरञ्जनमार्तिभञ्जनमिदं दृष्ट्वैव तिष्ठत्यसौ॥ ३२॥

**श्रीकृष्णः**—उपन्यस्तया विहङ्गवार्तया स्मारितताहगवस्थागोपीजनः।

(विभङ्गललितमवस्थाय वेणुञ्च पाणितलाभ्यामादाय तद्विवराणि कोमलतमाङ्गुलिदलैः स्पृशन्)

सुनन्द अस्मत्सखिषु त्वमत्यन्तान्तरङ्गः सखा, तेनातिगोप्यमपि किंचिदुच्यते यदि क्रियते।

**सुनन्दः**—कथं न क्रियते। पश्य

स्मृतः श्रुतो वा परिकीर्तितो वा
दृष्टोऽपि यः कष्टशतानि हन्ति।
तस्यैव वाक्यं न विनिष्क्रियेत
कृतघ्नता कास्ति परा ततोऽपि॥ ३३॥

**श्रीकृष्णः**—श्रूयतां तर्हि। अद्य प्रभातसमये सुगोपकुमारिकासु सततमस्मच्चरणपरिचरणकामुकासु प्रतिश्रुतमस्माभिः। यद्भवतीभिश्चन्द्राभ्युदये वृन्दावने समागन्तव्यमिति। तास्तु नाद्यापि दृश्यन्ते। तद्गच्छ तासां समाचारं गृहाण।

**सुनन्दः**—तथा (इति प्रस्थितः क्रमेण वर्धमानं कृष्णवेणुगीतं निशम्य मध्येमार्गं स्वगतम्)

वेणुस्वनोऽस्य परिकर्षति पृष्ठतो मां
(पुनरवधाय) चित्रं मयैव सह गच्छति गोष्ठमेषः ।
(पुनरप्यवधार्य) शीघ्रं प्रयाति पुरतोऽपि तेन मन्ये
दीपाय दैत्यरिपुणा प्रहितः प्रियासु ॥ ३४ ॥

(ततः शीघ्रं गोकुलं प्रति गत्वा स्वतः परितश्च गोपसमाचारं गृहीत्वैव श्रीकृष्णं प्रत्यागत्य)

शौरे सत्वरमेष गोकुलभुवं गत्वा भवद्वादितो
वृत्तान्तं प्रतिसद्मपद्मवदनाकर्णेषु चावेदयन् ।
आनन्दप्रचयेन बन्धुषु भृशं व्यग्रत्वमापादयं-
स्ता एताश्च समानयन् विजयते वेणुध्वनिर्दूतवत ॥३५॥

**श्रीकृष्णः**—तत्किं गोपकुमारिकाः समायान्ति ।

**सुनन्दः**—किमुच्यते गोपकुमारिका इति । उक्तं खलु प्रतिसद्मपद्मवदना इति ।

**श्रीकृष्णः**—किं तत्सर्वाः समायान्ति ।

**सुनन्दः**—अथ किम् । शृणु,

भुञ्जानाः कति बन्धुवर्गसहितं नेत्राम्बुजे कज्जलं
युञ्जानाः कति नैजवल्लभरताः संसेवमानाः कति ।
बिभ्राणाः कति भूषणानि च तनौ तल्पेषु साकं सुतै-
र्निद्राणाः कति सेवनाय भवतो धावन्ति गोपाङ्गनाः ॥३६॥

**श्रीकृष्णः**—(स्वगतम्)

सहसा संपरित्यज्य सर्वस्वीयेषु सौहृदम् ।
सन्यासिन इवायान्ति कामिन्यो मामनुव्रताः ॥ ३७ ॥

अथवा कथमेवार्तिलब्धमेवासु साधकावस्थसन्यासिसामान्यमुपन्यस्यते ।

यतः, एता गायन्ति मामेव ध्यायन्ति च सदैव माम् ।
मामेव प्रेमसंपृक्ताः प्रेक्षन्ते च प्रतीक्षणम् ॥ ३८ ॥

**सुनन्दः**—( आयातीः समवलोक्य ) श्रीकृष्ण महोत्साहसमाजमासां पश्य,

बन्धूनप्यवतो हठाद्विदधति त्यागं गृहाणां निशि
स्नेहादाशु बहिर्व्रजन्ति विपिनं चैताः समायान्त्यमूः ।
किं त्वत्पदपङ्कजाधिगतये सोत्कण्ठमेणीदृशो
धावन्त्यो गणयन्ति न स्तनयुगश्रेणीगतं गौरवम् ॥ ३९ ॥

**श्रीकृष्णः**—( स्वगतम् ) अहो अस्मत्सान्निध्यकामुका एता गोकुलस्त्रियः शताधिकाः परिदृश्यन्ते । ( प्रकाशम् ) सुनन्द कामिनीकदम्बकं कीदृक् दृश्यते पश्य ।

**सुनन्दः**—उल्लसन्मुखसरोजराजितं
कुन्तलभ्रमरपुञ्जरञ्जितम् ।
भाति चारुकुचकोशशोभितं
कामिनीकनकपद्मिनीवनम् ॥ ४० ॥

**श्रीकृष्णः**—जङ्गमं पद्मिनीवनमिति वक्तव्यम् ।

**सुनन्दः**—एवमेव । ( स्वगतम् ) अतः परमत्रावस्थानमनुचितम् । ( प्रकाशम् ) श्रीकृष्ण गम्यते । अन्यथा वृद्धौ पितरौ रात्रौ कुत्र गत इति मां विना चिन्ताक्रान्तौ भवेताम् ।

**श्रीकृष्णः**—( सस्मितम् ) गम्यताम् ।

( ततः प्रस्थिते तस्मिन्नाकाशे प्रविशतो नारदतुम्बरू )

**तुम्बरुः**—महामुने कथं पुनः पुनरत्रागम्यते ।

**नारदः**—श्रीगोविन्दमुखारविन्दजमरुत्सौगन्ध्यसंवर्धिना
पीयूषादपि पेशलेन मुरलीगीतस्वनेनामुना ।
स्वर्लोकस्थितयोऽप्यमूर्युवतयोऽप्येता व्रजेऽवस्थिता
धृत्वा कर्णपुटे यदीयगुरुतां कृत्यं किमातन्वते ॥ ४१ ॥

भवता कुतः समागम्यते ।

**तुम्बरुः**—अस्य भगवतश्चतुर्दशभुवनरचनाकौतुकावल्यवलोकनकामुकेन मया सप्तसु पातालेषु गतम्, तत्र चतुर्दशसुरसदनादप्यभिनवरचनावलोकनादानन्दमनुभूय ततोऽप्यधस्ताद्गतम्, तत्र चतुर्दशभुवनभारविधारकफणिकुलचक्रवर्तिफणिमण्डलमणिगणप्रभया निरस्तसमस्तसन्तमसे यदनुभूतं तदुच्यते।

गोपीपतेर्वितवेणुरवं निशम्य
शेषो निमज्ज्य सहसा सुखसिन्धुमध्ये।
तत्रोच्छलद्विपुलवीचिषु तच्छिरस्था
पातालपङ्क्तिरखिलापि च संपपात॥ ४२॥

**नारदः**—अहो त्रिभुवनसुखहेतुभूतं भगवतो गीतम्।

**तुम्बरुः**—महामुने कथमत्रैवाकाशे निगूढ इव तिष्ठसि। नागच्छसि भगवन्तं नमस्कर्तुम्।

**नारदः**—अस्मन्नमस्कारस्यावसरो न विद्यते। पश्य व्रजसुन्दरीणां

वदनेषु च लोचनेषु चापि
स्तनकोशेषु च लोलदृष्टिरेषः।
परितः परिवेष्टितः प्रियाभि-
र्भगवान् सुधृतेन्दिराक्रियाभिः॥ ४३॥

**तुम्बरुः**—अहो एकेनैव कथमेताः सकलगोकुलवासिन्यः कामिन्यो वशीक्रियन्ते।

**नारदः**—केवलमेता एव? । पश्य पश्य (इत्याकाश एव प्रदेशान्तरे हस्तेन प्रदर्शयन्)

निशम्यैतद्गीतं सुरपतिरथोऽश्वाच्च चलितो
विमानश्रेणीभिः सपदि वशमेत्येह तरसा।
समालोक्यैवामुं कमलनयनं स्वर्गललना
लभन्तेऽमूः सर्वाः सपदि परमानन्दविषयम्॥ ४४॥

तुम्बरुः—( साश्चर्यम् ) कथमेता निकटवर्तिनोऽप्यस्मान्न पश्यन्ति ।

नारदः—अहमत्र मन्ये ।

स्वर्लोकसौख्याभिरुचिं विहाय
मनः स्वमेकाग्रमथो विधाय
स्वर्गाङ्गनाभिर्नयनारविन्दैः
संपूज्यते संप्रति गोपिनाथः ॥ ४५ ॥

तदेता अस्य लावण्यसिन्धोः सान्निध्यसौख्यं गोपाङ्गनाभिरनुभूयमानं कामयन्ते ।

तुम्बरुः—अहो भाग्यं गोपाङ्गनानाम्, यतो यद्देवाङ्गनाभिर्न लभ्यते तदेताभिर्भुज्यते ।

नारदः—कियद्वर्णनीयं भाग्यम् । पश्य,

यत्प्रीतये शतमुखप्रमुखामराणां
नाद्यापि कार्यसफलो भवति प्रयत्नः ।
सोऽयं स्वयं व्रजविलासिनिवासिनीना-
मानन्दनार्थमुत सज्जनतां तनोति ॥ ४६ ॥

तथाहि, वेगेनाध्वनि धावनश्रमजुषामेणीदृशां श्रीमता
रूपेनैव तु केवलेन कुरुते विश्रान्तिमात्यन्तिकी ।
स्वीकुर्यादयमत्र नः किमु निराकुर्यादितीमं मनः-
सन्देहं च पराकरोति चपलैरालोकितैः श्रीपतिः ॥ ४७ ॥

तुम्बरुः—अहो विचित्रम् ।

गोपाङ्गनानां च सुराङ्गनाना-
मसंख्यचक्षुर्भ्रमरावलीयम् ।
आनन्दमाविन्दति सावकाश-
मेकत्र गोविन्दमुखारविन्दे ॥ ४८ ॥

अथवा, एतत्पङ्कजमित्यनेककविभिर्वक्त्रं समुत्प्रेक्षितं
सौन्दर्यस्य तु सिन्धुरेव तदिदं प्रत्यक्षमुद्वीक्ष्यते।
यत्रामूर्वनदेवताव्रजवधूस्वर्गाङ्गना दृश्यतां
सर्वा एव विसर्गवृत्तिशफरीवृत्तं समातन्वते ॥ ४९ ॥

( तावत्प्रविशति सर्वासां पृष्ठतो राधा, परितोऽङ्गनाभिरावेष्टितं श्रीकृष्णं दृष्ट्वा )

राधा—( स्वगतं सोच्छ्वासम् )

चन्द्रः शात्रवमाततान कुसुमैर्बाणत्वमाविष्कृतं
पङ्कः कुङ्कुमकेसरस्य च मरुद्धालाहलं केवलम्।
एतावन्ति दिनानि कञ्जनयनं श्रीकृष्णमेनं विना
कालः स्वल्पतमोऽपि कल्पतुलनामेवाललम्बे मम ॥५०॥

अहो कष्टमधुनापि।

आकारिताहमेकेन वेणुगीतेन केवलम्।
मध्य एताः समागत्य वैरिकृत्यं वितन्वते ॥ ५१ ॥

आश्चर्यम्, चेतः कुटिलमेतासां दृशश्च कुटिलाः स्फुटम्।
तेन ताभिर्हृषीकेशं वशीकुर्वन्त्यमूः कथम ॥ ५२ ॥

यद्वा एतेनैवातिधूर्तेन वयमिव एता अपि संकेतपूर्वमाकारिता भविष्यन्ति। अत एवायमेतास्वनुरागपूर्वकं व्यवहरति। तथाहि,

काश्चिन्नन्दयति स्मितेन लघुना भ्रूमण्डलोज्जृम्भितै-
रेवान्याः कुचकोशयोर्निजदृशोर्लौल्येन चोन्मादयति।
किं चायं किमपि च्छलं विरचयन् गच्छन् समीपे शनैः
कस्याश्चिद्वसनाञ्चलं चपलयन् रोमाञ्चमेवाञ्चति ॥५३॥

तदधुना किं कर्तव्यम् ( विमृश्य स्वगतम् )

चेतः स्वकीयचपलत्वमपोह्य दूरं
स्थैर्यं दधातु सरसीरुहलोचनेऽस्मिन्।
सोऽयं स्वतीव चपलस्त्वदमञ्चतीह

नैव स्थिरस्य चपलस्य च सख्यमस्ति ॥ ५४ ॥

अतः परावृत्य गन्तव्यम् । ( तदप्यशक्यं मत्वा )

गेहं नैव सुखाय नापि च सुहृद्वर्गोऽस्ति चित्तानुगो
नैवैतौ चरणौ च संप्रति परावृत्तिं विधातुं क्षमौ ।
व्यालीभिर्हरिचन्दनं तु परितः संवेष्टितं किं मयि
व्यर्थैव प्रतिकूलतात्र भवता धातः समातन्यते ॥ ५५ ॥

( इति तत्रैवोपविष्टायां राधायां तद्विदित्वा )

**श्रीभगवान्**—(स्वगतम्) किमत्र कर्तव्यं यदि राधायाः समाधानाय गम्यत एतासामात्यन्तिकी खिन्नता प्रादुर्भवेत् । यदि न गम्यते जलजनयना जीवनमेव जह्यात् । तदुभयतः संकटे सकलजनसिद्धं समकालसान्निध्यमेव शरणम् । ( इति सर्वाः प्रियतमा असंत्यज्यैव तस्याः समीपमुपगच्छन् दूरतस्तां दृष्ट्वा ) अहो मां विना

संबिभ्रती करतलेन कपोलमेकं
नेत्राम्बुजे च दधती गलदश्रुबिन्दून् ।
भूयश्च निश्वसितमेव समुत्सृजन्ती
राधा दधाति बत खेदमतीव चित्ते ॥ ५६ ॥

( ततो राधा विकसितसरसिजसदृशप्रसन्नवदनं मदनविमोहनं वपुषः समीपे समागतं समवलोक्य )

**राधा**—( स्वगतम् )

जहिहि जहिहि सद्यश्चित्त चिन्ताभितापं
नयनकमलयुग्म स्वीकुरुष्व प्रमोदम् ।
उदयति मधुशत्रोर्वक्त्रराकाशशाङ्कः
सपदि सकलशोकध्वान्तविध्वंसनाय ॥ ५७ ॥

**श्रीकृष्णः**—(अधोवदनमधोदृष्टिं च्यावास्थिताया दृष्ट्वा मुखकमलमुन्नमय्य)

त्वामेव कल्पवृक्षस्य मूले जलरुहेक्षणे चिरं प्रतीक्षमाणस्य किमुपेक्षा युज्यते ( हस्ते धृत्वा )

उत्तिष्ठ वामनयने कुरुष्व वचनं मम।
गच्छ वः कल्पवृक्षस्य मूले विमलमारुते ॥ ५८ ॥

**राधा**—( सक्रोधम् ) गच्छ त्वमेव रमणीयतमे प्रदेशे।
तत्रापि मम कथय किम्वस्ति विशेषकार्यम् ॥ ५९ ॥

**श्रीकृष्णः**—राधे त्वां विना न गमिष्यामि।

**राधा**—( सव्यङ्ग्यम् ) एकां परित्यज्य सरोजनेत्र
बह्वीर्भज त्वमसि नीतिषु संप्रवीणः ॥ ६० ॥

**श्रीकृष्णः**—सत्यं प्रधानस्यानुरोधेन त्यज्यन्ते बहवो गुणाः।
मम प्रधानभूता त्वं गुणीभूताः परा मताः ॥ ६१ ॥

किंच, बह्वीषु गोपकन्यासु वल्लभासि त्वमेव मे।
सर्वास्वपि च तारासु शशाङ्कस्येव रोहिणी ॥ ६२ ॥

किंतु बहुजनसाध्यरासक्रीडाकौतुके कामुकस्याभिप्रेतं साधयितुं त्वमर्हसीति कथमेतस्मिन् समागते गोपीमण्डलेऽस्मिन् समये स्थीयते।

**नारदः**—तुम्बरो जानासि।

राधा समाधानविधिं मुरारे-
र्नैवात्र जानन्ति सरोजनेत्राः।
एतस्य वासामनुरञ्जनानि
लीलाविलासानि च सा न वेत्ति ॥ ६३ ॥

( उपसर्प्याकाशे कर्णं दत्वा ) तुम्बरो ! अन्विष्यतां कोऽयं ध्वनिः।

**तुम्बरुः**—( उपरि गत्वा पुनरावृत्य )
श्रीगोविन्दप्रियं कर्तुं सुराधीशस्याज्ञया भृशम्।
दिवि देवैश्च सुदिव्यः कृतोऽयं दुन्दुभिध्वनिः ॥ ६४ ॥

**नारदः**—किमुद्दिष्टम् ।

**तुम्बरुः**—श्रूयताम् ।

सद्यः समस्तसुरसौख्यनिदानभूताः
स्वर्वायवः सुरभयः सपदि प्रयान्तु ।
पुष्पाणि नन्दनवनाद्दनवो नयन्तु
श्रीनन्दनन्दनमनःपरितोषणाय ॥ ६५ ॥

तदेवं तदधुनात्र फलितं दृश्यते । परंतु,

नास्य स्वभावसुरभिष्वपि मारुतेषु
दिव्येषु नैव कुसुमेषु न तद्वनेषु
चित्तं समुल्लसति संप्रति किन्त्वमीषां
गौराङ्गवल्गुषु विलोलविलोकितेषु ॥ ६६ ॥

**तुम्बरुः**—महामुने पश्य पश्य ।

कर्णिकेव कमलस्य मध्यतोऽ-
वस्थितो जलजवल्गुलोचनः ।
यत्र बद्धपरिमण्डलाकृति-
र्भ्राजते व्रजवधूकदम्बकम् ॥ ६७ ॥

**नारदः**—परंतु,

परितः श्रीहरिमण्डलस्थिता
युवतीनां शतशोऽपि पङ्क्तयः ।
इदमाश्चर्यमथापि माधवे
न विदन्ति व्यवधानमण्वपि ॥ ६८ ॥

अपिच, कोटिकन्दर्पलावण्यो मनोनयनरञ्जनः ।
पश्यत्यभिमुखो भूत्वा कृत्स्ना युगपदङ्गनाः ॥ ६९ ॥

**तुम्बरुः**—अथास्य रासक्रीडाकौतुकमवलोक्यताम् ।

नवाम्बुधरसुन्दरः कनकपीतपूर्णाम्बरः
सरोजसमलोचनः श्रमसमूहनिर्मोचनः ।
स एष परितः स्थितो व्रजविलासिनीभिः समं
मनोज्ञमभिनृत्यति त्रिभुवनाभिरम्याकृतिः ॥ ७० ॥

किंच, गायन्ति गायति तथा हसिते हसन्ति
नृत्यन्ति नृत्यति हरौ सरसीरुहाक्ष्यः ।
जानाम्यनेन सरसीरुहलोचनेन
तादात्म्यमेव गमिता दयिताः स्वकीयम् ॥ ७१ ॥

( गोपीगीते कर्णं दत्वा )

महामुने आश्चर्यम्,
एतासां गीतचातुर्य्यमतिमाधुर्यसंकुलम् ।
परमानन्दरूपस्य गोविन्दस्य च यत्प्रियम् ॥ ७२ ॥

नैतावता गीतोत्कर्षो विज्ञायते ।

यतः, नश्वरमतितालं तनोति गीतं रमापतिप्रीतिम् ।
एतच्चरणसरोजे यदि हृदि भक्तिः समुल्लसति ॥ ७३ ॥

**नारदः**—किंतु, परिशीलितसंगीतदर्शनाभ्यां चतुर्दशभुवनेष्वप्रतिहतगमानाभ्यामावाभ्यां न ज्ञातपूर्वमेतादृशं गीतम् ।

**तुम्बरुः**—कथमनुपासितचरणानामनधीतसंगीतदर्शनानां गोपाङ्गनानामेतत्संभाव्यते ।

**नारदः**—अत्र भवति श्रीभगवतः परिचर्यैव कायवाङ्मनःपूर्वकमाचरिता विविधगुणप्रसवहेतुः ।

पश्य, अनुपासितगुरुचरणा असदाचरणा अपीह गोपीशाः ।
सकृदपि चित्ते धृत्वा भवन्ति भव्या गुणग्रामैः ॥ ७४ ॥

आस्तामियं प्रसक्तानुप्रसक्तिः, नृत्यमप्यमूषां भवत्यपूर्वम् । तथाहि,

चपलकुन्तलबन्धविगलत्कुसुमवृन्दमतिशयपरिमलमिलदलिकुलकृतव्याकुलविलोलविलोचनमतिचञ्चलहेमकुण्डलकिरणचञ्चलतयातिमनोहरं कटितटविराजन्मणिमयकाञ्चनकाञ्चीगुणानिकटनियोजितकिङ्किणीगुणकरचरणविभूषणझणत्कारनिनादेन च चित्ते चमत्कारकारणमेतं नृत्यम्।

नृत्ये समुल्लसति बल्लववल्लभानां
गोविन्दसन्निधिसुखेन समुद्धतानाम्।
दृष्ट्वोर्वशी किल वशीकृतशक्रचिन्ता
नृत्याभिमानमतुलं शिथिलं करोति ॥ ७५ ॥

तुम्बरो, धन्या एताः। पश्य,

पश्यन्ति वामनयनाः कमनीयमेनं
नृत्यन्ति चाभिमुखमस्य मनोरमस्य।
नन्दन्ति कृष्णकृतमञ्जुविलोकनेन
विदन्ति नान्यदथ किंचन पूतनारेः ॥ ७६ ॥

तुम्बरुः—पश्य पश्य कमलनयनोऽयम्,
अत्यन्तकमनीयं हि नृत्यन्तमबलाजनम्।
अवलोक्य रसाविष्टो नैव संप्रति नृत्यति ॥ ७७ ॥

कर्णे किंचन गूढमेव गदितुं प्रक्रम्य रम्याकृतिं
कामुत्फुल्लकपोलगोलफलके चुम्बत्यकस्मादसौ।
तत्कालं कुटिलभ्रुवाऽनृजुमुखा स्मेराननाम्भोरुहं
सा संतर्जयते दृशैव तु भृशं पद्मालयेयं रुषा ॥ ७८ ॥

अपि चान्यस्याः,

नृत्यन्त्या व्रजवासिसुन्दरदृशः कर्णावतंसीकृत-
प्रोन्मीलत्कमलोद्गतेन रजसा पर्याकुलं लोचनम्।
उन्मील्य स्वयमेव पाणिकमलद्वन्द्वेन वृन्दावन-
स्वामी नन्दयति स्ववक्त्रसुरभिश्वासानिलैः शीतलैः ॥७९॥

किं चान्यस्याः,

हारस्याथ परिच्युतस्य सुदृशो नृत्येऽमुना बन्धन-
व्याजेनैव कराम्बुजं कुचयुगे व्यापारमापादितम ।
सद्यः साप्यपसार्य कञ्जनयनं रोमाञ्चिता पाणिना
माल्यैरेव निहन्ति पद्मवदना वक्षस्थलस्योपरि ॥ ८० ॥

**नारदः**—( गोपीष्वावर्तनपरासु मुहुर्मुहुरावर्तनपरमवलोक्य हरिम् ) ।

गोपीनामङ्गभूतानामेतासामनुरोधतः ।
भजते मुहुरावर्त्तिं प्रधानश्चापि माधवः ॥ ८१ ॥

**तुम्बरुः**—अन्यस्याः

सरसिजनयनायाः स्वीयसान्निध्यसौख्य
प्रमुदितहृदयाया नर्त्तनेऽनुव्रतायाः ।
सपदि गलितबन्धं केशपाशं रमेशो
निजकरकमलाभ्यामेष बध्नाति यत्नात् ॥ ८२ ॥

**नारदः**—आश्चर्यम्,

यद्वशीकरणकामुका रमा
नृत्तमाभवति तत्र कर्हिचित् ।
सोऽयमद्य तरुणीभिरञ्जसा
सद्य एव तु वशीकृतो हरिः ॥ ८३ ॥

**तुम्बरुः**—अन्यस्याः,

प्रीत्या विलोक्य तु विलोलविलोचनाया
व्यालोलमेष कुचमण्डलमम्बुजाक्षः ।
वक्षस्थकौस्तुभमणिं प्रविधाय पृष्ठे
नृत्यक्षणेऽपि परिरम्भणमातनोति ॥ ८४ ॥
कस्याश्चिदंसे भुजमादधाति
दधाति कांचिच्चिबुके करेण ।

नृत्यश्रमस्वेदकणावभास-

मुखाम्बुजे चुम्बति काचिदेकाम ॥ ८५ ॥

**नारदः**—सोऽयमेतावन्तं कालं प्रत्येकं तल्लीलाविलासैर्व्यवधानमप्रदर्शयन्नेव गोपीजनानुरञ्जनं कृतवान् । इदानीं तु

सर्वाभिमुख्यमवलम्ब्य स एष मध्ये

भाति स्वयं विकचपङ्कजकर्णिकावत् ।

गोपीषु पद्मदलवत्परितः स्थितासु

प्रत्येकशोऽपि च परिस्फुरति प्रियासु ॥ ८६ ॥

**तुम्बरुः**—मध्ये स्थितः सकलगोकुलकामिनीनां

वक्त्राणि पश्यति न तृप्यति तावतासौ ।

प्रत्येकशो यदुपतिः परितः स्थितानां

पार्श्वस्थितिं च समुदञ्चति मूर्तिभेदैः ॥ ८७ ॥

किंच, भुजयुगलगृहीतकण्ठपार्श्व-

द्वयललनावदनावलोकनाय ।

निभृतमुभयतोऽपि भूरि वारं

चलयति वक्त्रसरोरुहं मुरारिः ॥ ८८ ॥

अपिच, उभयपार्श्वगतस्य रमापते-

मृदुविलोलकपोलयुगस्पृशा ।

निजकपोलयुगेन मृगेक्षणा

पुलकिता तु न विन्दति विच्युतिम् ॥ ८९ ॥*

( अथ भगवानेवं नानाविधमदनलीलाविलासैर्व्रजविलासिनीमनुरञ्जयन्सर्वां रात्रिं गमयन् प्राचीमवलोक्य गोपीः प्रति )

---

* इतः परं ग्रन्थद्वयेऽप्येकपत्रपरिमितो ग्रन्थस्त्रुटितः ।

प्राचीदिगभ्युदितमञ्चति शोणिमानं
विच्छायातमितवती खलु चन्द्ररेखा ।
( तासामुभयतो व्याकुलतामवलोक्य )
सूर्योऽभ्युदेष्यति गमिष्यति शीघ्रमेव
रात्रिः समेष्यति लसिष्यति चन्द्रिकैषा ॥ ९० ॥
युष्मत्कदम्बकमिहैष्यति वेणुगीते
रासोत्सवोऽपि च भविष्यति सोऽयमेव ॥ ९१ ॥

( इति हर्षविषादाभ्यां प्रस्थितासु गोपीषु नारदतुम्बरू सहामरवधूभिः समुपसर्प्य नमस्कृत्य तिष्ठतः, भगवानप्येतयोः स्वसंदर्शनानुरागं जानन्नपि सस्मितम् )

**श्रीभगवान्**—कुत्रागम्यते ?

**नारदः**—वाराहवामनमुखा बहवोऽवताराः
सन्त्येव संसृतिमहार्णवकर्णधाराः ।
श्रीनन्दनन्दन तवैव पदारविन्द-
संबन्धमिच्छति मनस्तु कुतोऽपि हेतोः ॥ ९२ ॥

अतिमहान्तोऽप्येवं प्रार्थयन्ति,

को वा जपः किमु तपः कतमच्च दानं
किं तीर्थपानमथ कश्च सुरोऽर्चनीयः ।
यन्नन्दनन्दननिरञ्जनसौख्यसिन्धु-
पादारविन्दमिह लोचनगोचरः स्यात् ॥ ९३ ॥

तस्मादस्माभिरप्येतत्संदर्शनानन्दकामनयात्रैव स्थीयते ।

**श्रीभगवान्**—अनुग्रह एवास्ति । परंतु त्रिभुवनवर्तिजनानां विविधवासनाभिरभिभूयमानमानसानां तत्तत्कर्मभिर्निरुद्धास्वस्मत्पदवीष्वभिधीयमाननामभिरुपकारायास्मद्गुणकर्मनामसंकीर्तनसंप्रदायः प्रवर्त्यताम् ।

**नारदः**—यदिदं तव कारुण्यं यदुवर यद्वा विभाति लावण्यम् ।
न हि दिवि भुवि पाताले ऽभूद्भवति भविष्यति च काले ॥९४॥

परंतु कारुण्यलावण्ययोर्महाविरोधः ।

**भगवान्**—कथं कथम् ।

**नारदः**—श्रूयताम् ।

कारुण्यमेतदखिलेऽपि जने त्वदीयं
सद्योऽपसारयति यष्टिरिवोद्यतास्मान् ।
लावण्यमद्भुतमिदं तु मनोरमं ते
बध्नाति रज्जुरिव पादसरोजमूले ॥ ९५ ॥

**श्रीभगवान्**—( सस्मितम् )

अस्मत्संदर्शनानन्दः समुल्लसति चेतसि ।
..................................................॥ ९६ ॥

यतास्वपि देवाङ्गनास्वेतदेव वक्तव्यम् ।

**नारदः**—स्वामिवचनसमन्वितं कारुण्यमेव बलवदिति आह ।

( इति नमस्कृत्य निष्क्रान्ताः सर्वे, भगवानपि दोहनसमयमनुसंधाय निष्क्रान्तः )

अस्त्यनन्तकविना विनिर्मितं-
श्रीपतेर्गुणगणैरलंकृतम् ।
साधुसंसदि मनोऽनुरञ्जनं
नाम नाटकमिदं प्रवर्त्तताम् ॥ ९७ ॥

शास्त्राणां परिशीलनैर्भृशमहो शिष्येषु चाध्यापनै-
र्ख्यात्युद्देशकृतैर्बभूव तु महाकृत्याभिमानं मनः ।
पुण्यैरेव तु संप्रति प्रतिपदं गोविन्दतत्तद्गुण-
श्लाघ्यं सौख्यपयोधिवीचिनिचयेष्वानन्दमाविन्दति ॥९८॥

साहित्यसंगीतकलासर्वभिज्ञो
जनः प्रमोदेन्न तथा तु किंचित् ।

तथापि गोविन्दकथारसज्ञा
यथा कथंचित्सुखिनो भवन्तु ॥ ९९ ॥

केऽपि प्रशंसन्तु हसन्तु केचित
न मे प्रसादो न च मे विषादः ।
परंतु गोविन्दपदारविन्दप्रियाः
प्रमोदन्तु निबधनेऽस्मिन् ॥ १०० ॥

इत्येषा वाङ्मयी पूजा श्रीमद्गोपालपादयोः ।
अर्पिता तेन मे देवः प्रीयतां भगवानसौ ॥ १०१ ॥

**इति श्रीमदापदेवसूनुनानन्तदेवेन विरचिते मनोऽनुरञ्जनाभिधाने हरिभक्तिनाटके पञ्चमोऽङ्कः समाप्तः ।**

समाप्तमिदं नाटकम् ।



# अशुद्धिशोधनम् ।



| अशुद्धम् । | शुद्धम् । | पङ्क्तिः । | पृष्ठम् । |
|---|---|---|---|
| कुल | कुलं | १३ | ५ |
| दीघि | दीर्घि | ३ | ६ |
| नू व | नव | ८ | ११ |
| विमख | विमुख | २२ | १३ |
| न्थ्यता | थ्यन्ता | १६ | १४ |
| रोऽय | रोऽयं | ३ | १७ |
| रञ्ज | रञ्च | १८ | २२ |
| माना- | माना: | १९ | २४ |
| दु:प | दुष्प | १७ | २८ |
| णमिव | णानिव | ६ | १९ |
| प्रपि | प्रापि | १५ | २९ |
| न्धिग्र | न्धिविग्र | ५ | ३० |
| तद्वा | तद्द्वा | ११ | ३१ |
| गछ | गच्छ | १५ | ३२ |
| मुच्छ् | उच्छ् | १६ | ३८ |
| वद | वदृ | १६ | ४७ |
| मारं | मरं | ५ | ५३ |
| य चाध | र्थतोऽध | १७ | ५४ |
| यो द्व | य द्व | १९ | ५६ |
| ष्टा | ष्टा | २० | ५८ |
| नन्धो | नद्यो | १७ | ६३ |
| तैले | तैलै | ८ | ६४ |
| स्तेषां | तासां | १६ | ६४ |
| म्ब:रु | म्बरु: | ३ | ६५ |
| मूदध्नि | मूर्द्ध्नि | १४ | ६५ |
| ततद् | तद् | २० | ६७ |
| सुज | सुरज | ९ | ६८ |
| दस्ति | देति | १५ | ६८ |
| ध्वा | दृध्वा | ४ | ३८ |
| सांनि | साक्षि | १६ | ७५ |
| न्वित | न्वितं | १९ | ७७ |
| मग्ना | मग्ना: | १७ | ७८ |
| प्यमे | प्ययमे | ८ | ८० |
| यमंन्वि | न्वि | २२ | ८० |
| यातु | यान्तु | ३३ | ८४ |
| स्तः | स्त | २४ | ८४ |
| न्स्यपि | त्यपि | १८ | ८५ |
| वति | वर्त्ति | ४ | ९१ |
| नैव | णैव | १७ | ९२ |
| स्नति | स्नसति | १५ | ९७ |
| वर्त्तिं | वृत्ति | ८ | ९९ |
| यात | यता | २ | १०१ |
| पनै- | पनै: | १८ | १०२ |

इत्यशुद्धिशोधनपत्रम् ।

